# THREE APABHRAṀS'A WORKS

OF

# JINADATTASŪRI

*With Commentaries*

Edited with Introductior otes and Appendices, etc

BY


LALCHANDRA BHAGAWANDAS GANDHI,

Jain Pandit, Oriental Institute, Baroda



1927

Oriental Institute

BARODA

जिनदत्तसूरिमूर्तिः ।



वि सं १३३४ वर्षे पत्तने जिनप्रबोधसूरिणा प्रतिष्ठिता ।

# क्रमसूची ।

जिनदत्तसूरिमूर्तिप्रतिकृति ।



# भूमिका

भाषाभेदकोविदा सुपरिशीलितवाङ्मया मनीषिण !

भाषाभेदाभिज्ञेषु न नामाभिनवं निवेदनीयमपभ्रंशभाषाविषये वा तत्काव्यविषये, तथापि याथातथ्येन तत्स्वरूपानभिज्ञेषु तज्जिज्ञासुषु स्वल्पज्ञेषु सूपयोगि समुपकारकमवसरोचितमत्यावश्यकं प्रासङ्गिकं चात्र तन्निवेदनम्, यद्भाषामयी प्रस्तुता काव्यत्रयी भारतीभक्तैरद्य सकुतूहलं दृष्टिपथपान्थीक्रियते ।

किञ्च ततोऽपि पूर्वमेतस्या काव्यत्रय्या कर्तृणां परिचय आवश्यक इति प्रज्ञापनीये तच्चरिते तत्पूज्यस्य गुरुवर्यजिनवल्लभस्येतिवृत्तं प्रभूतग्रन्थपर्यालोचनतः प्रोद्धृत्य प्राक् प्रदर्श्यते, यद्गुणस्तुतिरूपं चर्चरीसंज्ञितं सप्तचत्वारिंशद्वृत्तसमन्वितं प्रस्तुतकविजिनदत्तसूरिप्रणीतं काव्यमस्या काव्यत्रय्या प्रागेव प्रेक्षावद्भि प्रेक्षकैः प्रेक्षणक्षणीक्रियते ।

## जिनवल्लभसूरिः ।

जेसलमेरुजैनभाण्डागारीय-ग्रन्थसूच्यामप्रसिद्धग्रन्थग्रन्थकृत्परिचये ( पृ ४० ४१) संक्षेपतोऽस्माभि परिचायितोऽयं सूरिर्विशेषतोऽत्राभिज्ञाप्यते । विक्रमीयद्वादशशताब्द्यां सूरेरस्य सुप्रतिष्ठिता सत्ताऽसाधारणं पाण्डित्यं चारित्रपात्रत्वं च समधिगतप्रमाणैः सुतरां प्रतीयते । वि सं ११२५ वर्षे जिनचन्द्रसूरिविरचिता संवेगरङ्गशालाऽनेन गणिना संशोधिताऽऽसीदिति वि सं १२०७ वर्षीयताडपत्रीयपुस्तक-( जेसलमेरभां० सूची पृ २१, अप्र० पृ ३८ ) प्रान्तोल्लेखादवगम्यते ।

वि सं ११३८ वर्षे प्राग्वाटकुलीननेमिकुमारलिखितं कोट्याचार्यकृताया विशेषावश्यकटीकायास्ताडपत्रात्मकमेतदीयं प्राचीनं जीर्णमादर्शपुस्तकमद्याप्युपलभ्यते, यत्र जिनेश्वरसूरिशिष्यत्वमस्य निरदेशि । सूरिरयं स्वयमपि स्वीये प्रश्नोत्तरषष्टिशतककाव्येऽष्ट

१ लिखितं पुस्तकं चेदं नेमिकुमारसंज्ञिना प्राग्वाटकुलजातेन शुद्धाक्षरविलेखिना ॥ सं ११३८ पौषवदि ॥ कोट्याचार्यकृता टीका समाप्तेति ॥ ६ ॥ ग्रन्थाग्रमस्या त्रयोदश सहस्राणि सप्तशताधिकानि १३७०० । पुस्तकं चेदं विभुतश्रीजिनेश्वरसूरिशिष्यस्य जिनवल्लभ गणेरिति' ॥—पुण्यपत्तन( पूना )स्थ 'भाण्डारकरइन्स्टीट्यूट' संज्ञकसंस्थाया प्रति ( प्रतिकृतिप्राप्तिस्तु



# भूमिका

भापाभेदकोविदा सुपरिशीलितवाङ्मया मनीपिण !

भापाभेदाभिज्ञेपु न नामाभिनव निवेदनीयमपभ्रशभापानिपये वा तत्काव्यविपये, तथापि याथातथ्येन तत्स्वरूपानाभिज्ञेपु तज्जिज्ञासुपु स्वल्पज्ञेपु सूपयोगि समुपकारकमवसरोचितमत्यावश्यक प्रासङ्गिक चात्र तन्निवेदनम्, यद्भापामयी प्रस्तुता काव्यत्रयी भारतीभक्तैरद्य सकुतूहल दृष्टिपथपार्थीक्रियते ।

किञ्च ततोऽपि पूर्वमेतस्या काव्यत्रय्या कर्तयितु परिचय आवश्यक इति प्रज्ञापनाये तच्चरिते तत्पूज्यस्य गुरुवर्यजिनवल्लभस्येतिवृत्त प्रभूतग्रन्थपर्यालोचनत प्रोद्धृत्य प्राक् प्रदर्श्यते, यद्गुणस्तुतिरूप चर्चरीसज्ञित सप्तचत्वारिंशद्वृत्तसमन्वित प्रस्तुतकविजिनदत्तसूरिप्रणीत काव्यमस्या काव्यत्रय्या प्रागेव प्रेक्षावद्भि प्रेक्षकै प्रेक्षणक्षणीक्रियते ।

## जिनवल्लभसूरिः ।

जेसलमेरुजैनभाण्डागारीय-ग्रन्थसूच्यामप्रसिद्धग्रन्थग्रन्थकृत्परिचये ( पृ ४० ४१ ) सक्षेपतोऽस्माभि परिचायितोऽय सूरिर्विशेपतोऽत्राभिज्ञाप्यते । *विक्रमीयद्वादशशताब्द्या* सूरेरस्य सुप्रतिष्ठिता सत्ताऽसाधारण पाण्डित्य चारित्रपात्रत्व च समधिगतप्रमाणै सुतरां प्रतीयते । वि स ११२५ वर्पे जिनचन्द्रसूरिविरचिता सवेगरङ्गशालाऽनेन गणिना सशोधिताऽऽसीदिति वि स १२०७ वर्पीयताडपत्रीयपुस्तक—( जेसलमेरभां० सूची पृ २१, अप्र० पृ ३८ ) प्रान्तोल्लेखादवगम्यते ।

वि स ११३८ वर्पे प्राग्वाटकुलीननेमिकुमारलिखित कोट्याचार्यकृताया विशेपावश्यकटीकायास्ताडपत्रात्मकमेतदीय प्राचीन जीर्णमादर्शपुस्तकमद्याप्युपलभ्यते, यत्र जिनेश्वरसूरिशिष्यत्वमस्य निरदेशि । सूरिरय स्वयमपि स्वीये प्रश्नोत्तरपष्टिशतककाव्येऽष्ट-

१ लिखित पुस्तक चेद नेमिकुमारसज्ञिना प्राग्वाटकुलजातेन शुद्धाक्षरविलेखिना ॥ स ११३८ पौपवदि ७ ॥ कोटयाचार्यकृता टीका समाप्तेति ॥ ६ ॥ ग्रथाग्रमस्या त्रयोदश सहस्राणि सप्तशताधिकानि १३७०० । पुस्तक चद विधुतथीजिनेश्वरसूरिशिष्यस्य जिनवल्लभ गणेरिति' ॥—पुण्यपत्तन( पूना )स्थ 'भाडारकरइन्स्टीट्यूट' सज्ञकसस्थाया प्रति ( प्रतिकृतिप्राप्तिस्तु सूर्यपुरीयजैनानन्दपुस्तकालयत )

सप्ततिकादौ च जिनेश्वरसूरिमभयदेवाचार्यं च सत्स्तुतिपात्र सद्गुरु च समसूचयत्। प्रायेणाय निजां कृतिं 'जिनवल्लभ' इति 'जिनवल्लभगणि' इति च नाम्नाऽभ्यजिज्ञपत्।

---

१ क स्यादम्भसि (म्बुधौ)त्रारिवायसवति क द्वीपिन हन्त्यय
लोके प्राह हय प्रयोगनिपुणै क शब्दधातु स्मृत ?।
ब्रूते पालयिताऽत्र दुधरतर क क्षुभ्यतोऽम्भोनिधे—
ब्रूहि श्रीजिनवल्लभस्तुतिपद कीदृग्विधा क सताम् ? ॥
—जिनवल्लभसूरिविरचिते प्रश्नशते (श्लो० १५९)

अव०—**मद्गुरवो जिनेश्वरसूरय**। मद्गुर्जलचरायमस्तस्य रव शब्द। अजिने चर्मणि 'निमित्तात् कर्मसंयोगे सप्तमी' इत्यनेन 'अजिने' इत्यत्र सप्तमी। हे अश्व! 'रस लस शब्दे' इति वचनात्। हे ऊ रक्षक 'अवतीति क्विप् अव्यचीयादिना ऊटि रूपम्'। रयो वेग। मम **जिनवल्लभस्य** गुरवो मद्गुरव। एवंविधा सन्त के **जिनेश्वरसूरय** सता शिष्टाना स्तुतिपदमित्यथ ॥

पाके धातुरवाचि क ? क्व भवतो भीरोर्मन प्रीतये ?
साल्ङ्कारविदग्धया वद कया रज्यन्ति विद्वज्जना ?।
पाणौ किं मुरभिद् बिभर्ति ? भुवि त ध्यायन्ति के वा सदा ?
के वा स(म)न्तगुरवोऽत्र चारुचरणश्रीसुश्रुता विश्रुता ? ॥ (श्लो० १५८)

अव०—**श्रीमदभयदेवाचार्या**। 'श्री पाके' इति वचनात् श्रीधातु। ममाभय ददातीति मदभयदस्तस्मिन् यो मदभय ददातीति तत्र मम मन प्रीतियुक्त भवतीत्यभिप्राय। वाचा वचनेन। अरा विद्यन्ते यत्र तदरि चक्र। ए विष्णौ भक्तिर्येषा ते आ वैष्णवा तत्र भक्तिश्लिष्ण् ॥
—स्तोत्ररत्नाकरे (महेसाणाश्रीयशोविजयजैनसंस्कृतपाठशालया प्रकाशिते भा० २)

लोकार्यकूर्चपुरगच्छमहाघनोत्थमुक्ताफलोज्ज्वल**जिनेश्वरसूरि**शिष्य। २४
प्राप्त प्रथा भुवि **गणिजिनवल्लभो**ऽत्र तस्योपसम्पदमवाप्य तत श्रुत च ॥
—अष्टसप्ततिकायां (चित्रकूटीयमहावीरप्रासादशिलालेखे)

२ सूक्ष्मार्थविचारसारनामसार्धशतकप्रान्ते—
**जिणवल्लहगणि**लिहियं सुहुमत्थवियारलवमिणं सुभणा।
निसुणंतु सुणंतु सयं परे वि बोहिंतु सोहंतु ॥

षडशीत्यपरनामागमिकवस्तुविचारसारप्रान्ते—
**जिणवल्लहेण**णीयं जिणगणगणमयणमुद्धरिउमिमं।
हियकरिणो सुयजणा निसुणंतु गुणंतु जाणंतु ॥

पिण्डविशुद्धिप्रान्ते—
इच्चेय **जिणवल्लहेण गणिणा** पिण्डविसुद्धिओ किंची।
पिंडविहाणत्थाणमाए भणिया समासा वि।

पोषधविधिप्रान्ते—

**गणिजिणवल्लहे**ण पोसहविहिमिह लिहिय हियट्ठया ।

सइ हियए कुणतु निसुणतु गुणतु सुणतु **विहि**रया ॥

सङ्घपट्टकप्रान्ते—( परि० १, पृ० ८६ द्रष्टव्यम् )

प्रश्नोत्तरषष्टिशतकप्रान्ते—

प्रत्येक हरिधान्यभेदशशिन पृच्छन्ति कि लुब्धक ?

त्व प्राप्त कुरुषे मृगव्रजमयोऽस्त्रादद् गृहीताऽवदत् ।

कीदृग् भाति सरोऽर्हतश्च सदन किं चात्पधीर्नाप्नुवन्

पृष्ट प्राह तथा च केन मुनिना प्रश्नावलीय कृता ? ॥—अव० **जिनवल्लभेन।**

अजितशान्तिस्तवप्रान्ते—

इय विनया-जियसत्तुपुत्त सिरिअजियजिणेसर !

तह अइरा—विससेणतणय ! पचमचक्कीसर ! ।

तित्थयरसोलमम ! सतिजिण **वल्लह** सतह

कुरु मगलमवहरसु दुरियमखिल वि थुणतह ॥

पार्श्वनाथस्तोत्रप्रान्ते—

वाघारियपाणि य मासिएण सावणसियट्ठमीए तुम ।

सम्मेयपव्वए **जिण वल्लह**सिवसुक्ख पत्त जए ॥

भत्तिब्भरादि—वीरस्तोत्रप्रान्त—

इय तुह गुणक्कणगुणणेण ज मए किंचि अज्जिय कुसल ।

तेण तुम चिय मज्झ सया वि **जिण वल्लहो** होज्जा ॥

दुरियरयादि—वीरस्तोत्रप्रान्ते—

एव वीरजिणेस दीणसर ! तुम मोहधविद्धसण ।

भवभोदहनाहसाहजणय दासायरुच्छेयण ।

थोउ ज कुसलाणुबन्धिकुसल पत्तो म्हि किंचि तओ

जाइज्जा **जिण वल्लहो** मह सया पायप्पणामो तुह ॥

भावारिवारणादि—वीरस्तोत्रप्रान्त—

इत्य ते समसस्कृतस्तवमह प्रस्तावयामासिवान्

आशाम जिनवीर ! नन्द्रपदवीं न प्राज्यराज्यश्रियम् ।

लीलामाजि न वल्लभप्रणयिनी-वृन्दानि किन्त्वर्थये

नायेद् प्रयय प्रमादविशदा दृष्टिं दयालो ! मयि ॥

सप्ततिकादौ च जिनेश्वरसूरिमभयदेवाचार्यं च सत्स्तुतिपात्रं सद्गुरुं च समसूचयत्। प्रायेणाय निजां कृतिं 'जिनवल्लभ' इति 'जिनवल्लभगणि' इति च नाम्नाऽभ्यजिज्ञपत्।

---

१ कः स्यादम्भसि (म्बुधौ)?वारिवायसवति क द्वीपिन हन्त्यय
लोके प्राह ह्य प्रयोगनिपुणै क शब्दधातु स्मृत ?।
भूते पालयिताऽत्र दुधरतर कः क्षुभ्यतोऽम्भोनिधे—
ब्रूहि श्रीजिनवल्लभस्तुतिपद कीदृग्विधा कः सताम्? ॥
—जिनवल्लभसूरिविरचिते प्रश्नशते (श्लो० १५९)

अव०—**मद्गुरवो जिनेश्वरसूरय** । मद्गुर्जलवायसस्तस्य रव शब्द । अजिने चर्मणि 'निमित्तात् कर्मसंयोगे सप्तमी' इत्यनेन 'अजिने' इत्यत्र सप्तमी। हे अश्व! 'रस लस शब्दे' इति वचनात्। हे ऊ रक्षक 'अवतीति क्विप् अव्यचीयादिना ऊटि रूपम्'। रयो वेग । मम **जिनवल्लभस्य** गुरवो मद्गुरव । एवंविधा सन्त के **जिनेश्वरसूरय** सतां शिष्टानां स्तुतिपदमित्यर्थ ॥

पाके धातुरवाचि क ? क भवतो भीरोर्मन प्रीतये ?
सालङ्कारविदग्धया वद कया रज्यन्ति विद्वज्जना ?।
पाणौ किं मुरजिद् बिभर्ति ? भुवि त ध्यायन्ति के वा सदा ?
के वा स(म)त्गुरवोऽत्र चारुचरणश्रीसुश्रुता विश्रुता ?॥ (श्लो० १५८)

अव०—**श्रीमदभयदेवाचार्या** । 'श्री पाके' इति वचनात् श्रीधातु । ममाभयं ददातीति मदभयदस्तस्मिन् यो मदभयं ददातीति तत्र मम मन प्रीतियुक्तं भवतीत्यभिप्राय । वाचा वचनेन । अरा विद्यन्ते यत्र तदरि चक्रं। ए विष्णौ भक्तिर्येषां ते आ वैष्णवा तत्र भक्तिरिलष्णु ॥
—स्तोत्ररत्नाकरे (म्हेसाणाश्रीयशोविजयजैनसंस्कृतपाठशालया प्रकाशिते, भा० २)
लोकार्यकूर्चपुरगच्छमहाधनोत्थमुक्ताफलोज्ज्वलजिनेश्वरसूरिशिष्य ।
प्राप्त प्रथां भुवि गणिजिनवल्लभोऽत्र तस्योपसम्पदमवाप्य तत श्रुतं च ॥ २४
—अष्टसप्ततिकायां (चित्रकूटीयमहावीरप्रासादशिलालेखे)

२ सूक्ष्मार्थविचारापरनामसार्धशतकप्रान्ते—
जिणवल्लहगणिलिहियं सुहुमत्थवियारलवमिणं सुभणा ।
निसुणंतु सुणंतु मयं परे वि बोहिंतु सोहंतु ॥
षडशीत्यपरनामागमिकवस्तुविचारसारप्रान्ते—
जिणवल्लहो गणीय जिणागमणामयगमुद्धरिंसुमिम ।
हियकंखिणो मुहज्जणा निसुणंतु मुणंतु जाणंतु ॥
पिण्डविशुद्धिप्रान्ते—
इयेवं जिणवल्लहेण गणिणा पिंडविसुद्धिमा दि ॥।
पिंडविम्भाभत्थप्पाकय भ ग ग रि ।

पूर्वोक्तस्य वस्तुविचारसारस्य प्राकृतविवरणमेतस्यैव जिनवल्लभसूरे शिष्येण रामदेवगणिना विहित विलोक्यते ( जेसलमेरभा० सूची पृ ४६ ) यस्य रचना वि स ११७३ वर्षे इत्यन्यत्र पठ्यते ।

जिनवल्लभसूरिप्रणीतस्य पिण्डविशुद्धिप्रकरणस्य वृत्तिश्चान्द्रकुलीनचन्द्रसूरेरन्तेवासिना यशोदेवसूरिणा वि स ११७६ वर्षे दृब्धोपलभ्यते ( जेसलमेरभा० सूची पृ ३९, पत्तनीयभा० सूची च द्रष्टव्या)

सुप्रसिद्धवैराग्यशतककर्तु कविपद्मानन्दस्य पित्रा जिनवल्लभसूरिशान्तोपदेशामृतसिक्तेन धनदेवश्रेष्ठिना नागपुरे नेमिनाथसदन निर्मापितमासीत्—

"सिक्त श्री**जिनवल्लभ**स्य सुगुरो शान्तोपदेशामृतै
श्रीमन्**नागपुरे** चकार सदन श्री**नेमिनाथ**स्य य ।
श्रेष्ठा श्री**धनदेव** इत्यभिधया ख्यातश्च तस्याङ्गज
**पद्मानन्द**शत व्यधत्त सुधियामानन्दसम्पत्तये ॥"

—वैराग्यशतकप्रान्ते ।

सुप्रसिद्धसिद्धान्तव्याख्याता कुमारपालभूपालसमकालीनो मलयगिरिरपि जिनवल्लभीयषडशीतिक व्याख्यातवान् ।

चान्द्रकुलानघनेश्वरसूरि—( वि स ११७१ वर्षे जिनवल्लभीयसार्धशतकवृत्तिकृत् )—प्रशिष्योऽजयदेवार्णोराजादिसम्मानितधर्मसूरे शिष्यो यशोभद्रसूरिर्जिनवल्लभीयागमिकवस्तुविचारसारविवरणे इत्थमुल्लिखति स्म—

"क्वासौ श्री**जिनवल्लभ**स्य रचना सूक्ष्मार्थचर्चाऽञ्चिता
केय मे मतिरग्रिमाप्रणयिनी मुग्धत्वपृथ्वीभुज ।
पङ्गोस्तुङ्गनगाधिरोहणसुहृद् यत्नोऽयमायास्ततो-
ऽसद्ध्यानव्यसनार्णवे निपतत स्वान्तस्य पोतोऽर्पित ॥"

—पत्तनीयभा० सूची ।

वि स १२२३ वर्षे सूरिपदभृत् वि स १२७७ वर्षे च स्वर्गभाग् जिनपतिसूरिर्जिनवल्लभीयसङ्घपट्टकविवृतिप्रारम्भे प्रवक्ति स्म—

"क्वेमा श्री**जिनवल्लभ**स्य सुगुरो सूक्ष्मार्थसारा गिर
क्वाह तद्विवृतौ क्षम क्रमजुषां दुर्मेधसामग्रणी ।
द्विद्( ड् )गन्ध(?)द्विपदन्तभञ्जनभुजस्तम्भैर्जयश्री क्व नु
प्राप्या सङ्गरमूर्धनि व्यवसित क्लात्र क्व तल्लिप्सया ॥

१ अग्रे प्रदर्श्यमानजिनदत्तसूरिचरितेऽस्य सवादोऽवलोक्यते ।

वि स ११६४ वर्षेषु चानेन **जिनवल्लभगणि**ना निजाष्टसततिका–सङ्घपट्टक–धर्मशिक्षाऽऽदि चित्रकूट–नरवर–नागपुर–मरुपुरादिषु स्वप्रतिष्ठितवीरविधिचैत्यादिषु प्रशस्तिरूपेणोत्कीर्णं कारितमासीदिति श्रूयते ।

वि स ११४१ वर्षे दीक्षाभाक्, वि स ११६९ वर्षे सूरिपदप्रतिष्ठित, वि स १२११ वर्षे च स्वर्गभाक् प्रस्तुतकाव्यत्रयीप्रणेता जिनदत्तसूरिरेतस्य जिनवल्लभाख्यनिजगुरोर्भूरिगुणस्तुतिरूपां चर्चरीं व्यरचयत्, याऽत्र समीक्ष्यते । यत्र जिनवल्लभसूरेरसाधारणविद्वत्त्व तत्प्रकटितविधिपथस्य चाम्नाय प्राबोधि । तथा च स एव सूरिर्गणधरसार्धशतके स्वगुरुपरम्पराप्रदर्शनपूर्वमलङ्कारालङ्कृता विस्तृतां गुरुपारतन्त्र्यस्तवे च सक्षिप्तां जिनवल्लभसूरिस्तुतिं समकार्षीत्, परिशिष्ट( २-३ )दर्शनेन तत् प्रकट परिज्ञात भविष्यति ।

वि स ११७० वर्षे मुनिचन्द्रसूरिणा जिनवल्लभीयसार्धशतकस्य चूर्णिर्व्यरचि । वि स ११७० वर्षे धारायां जिनदत्तसूरिशिष्येण जिनरक्षितसाधुना, वि स ११७१ वर्षे पत्तने जयसिंहराज्ये जिनदत्तसूरिशिष्यब्रह्मचन्द्रगणिना च लिखितायां कविपल्हप्रणीताया पट्टावल्या जिनवल्लभस्य नाम परिपठ्यते ( परि ४ ) । वि स ११७१ वर्षे धनेश्वरसूरिसमर्थितायां जिनवल्लभगणिप्रणीतस्य सूक्ष्मार्थविचारसारापरनामसार्धशतकस्य वृत्तावपि जिनवल्लभस्य सूरिविशेषणमभयदेवसूरिशिष्यत्व च व्याहारि ।

जिनवल्लभसूरिरचितस्यागमिकवस्तुविचारसारापरनामषडशीतिकस्य वृत्तिर्जयसिंहदेवराज्ये वि स ११७२ वर्षे बृहद्गच्छीयजिनदेवोपाध्यायशिष्यहरिभद्रसूरिणा समर्थिता भावनगरस्थयाऽऽत्मानन्दसभया प्राचीनकर्मग्रन्थेषु प्रकाशिता समुपलभ्यते ।

---

१ शशि-मुनि-पशुपतिसङ्ख्य वर्षे विक्रमनृपादतिक्रान्ते ।
चैत्रे सितपञ्चम्यां समर्थितेय गुरौ वारे ॥

—सा श वृत्तौ धनेश्वराचार्य ।

२ कर्मप्रकृति–पञ्चसङ्ग्रहादिगम्भीरशास्त्रेभ्योऽर्थानुद्धृत्य कर्मग्रन्थतिविस्तरशास्त्राणां प्रसङ्गतोऽन्यदितरेषां च केषांचित् प्रसत्ताय सूक्ष्मार्थविचारसारनिमप्रतिमं श्रीजिनवल्लभाख्यः सूरिः सार्धशतकाख्य प्रकरण चिकीर्षु ++

—सा श वृ प्रारम्भे धनेश्वराचार्य ।

३ 'जिनवल्लभगणि' ति जिनवल्लभगणिनामकेन मतिमता [illegible] श्रीमदभयदेवसूरीणां शिष्येण लिखित [illegible] जिनवल्लभगणिलिखितम् ।

—षडशी वृ ( भावनगरस्थया जैनधर्म प्रसारकसभया प्रकाशित )—१ पत्र

पूर्वोक्तस्य वस्तुविचारसारस्य प्राकृतविवरणमेतस्यैव जिनवल्लभसूरे शिष्येण रामदेवगणिना विहित विलोक्यते ( जेसलमेरभा० सूची पृ ४६ ) यस्य रचना वि स ११७३ वर्षे इत्यन्यत्र पठ्यते ।

जिनवल्लभसूरिप्रणीतस्य पिण्डविशुद्धिप्रकरणस्य वृत्तिश्चान्द्रकुलीनचन्द्रसूरेरन्तेवासिना यशोदेवसूरिणा वि स ११७६ वर्षे दृब्धोपलभ्यते ( जेसलमेरभा० सूची पृ ३९, पत्तनीयभा० सूची च द्रष्टव्या)

सुप्रसिद्धवैराग्यशतककर्तु कविपद्मानन्दस्य पित्रा जिनवल्लभसूरिशान्तोपदेशामृतसिक्तेन धनदेवश्रेष्ठिना नागपुरे नेमिनाथसदन निर्मापितमासीत्—

"सिक्त श्रीजिनवल्लभस्य सुगुरो शान्तोपदेशामृतै
श्रीमन्नागपुरे चकार सदन श्रीनेमिनाथस्य य ।
श्रेष्ठी श्रीधनदेव इत्यभिधया ख्यातश्च तस्याङ्गज
पद्मानन्दशत व्यधत्त सुधियामानन्दसम्पत्तये ॥"

—वैराग्यशतकप्रान्ते ।

सुप्रसिद्धसिद्धान्तव्याख्याता कुमारपालभूपालसमकालीनो मलयगिरिरपि जिनवल्लभीयषडशीतिक व्याख्यातवान् ।

चान्द्रकुलीनधनेश्वरसूरि—( वि स ११७१ वर्षे जिनवल्लभीयसार्धशतकवृत्तिकृत् )–प्रशिष्योऽजयदेवार्णोराजादिसम्मानितधर्मसूरे शिष्यो यशोभद्रसूरिर्जिनवल्लभायागमिकवस्तुविचारसारविवरणे इत्थमुल्लिखति स्म—

"क्वासौ श्रीजिनवल्लभस्य रचना सूक्ष्मार्थचर्चोऽञ्चिता
क्वेय मे मतिरग्रिमाप्रणयिनी मुग्धत्वपृथ्वीभुज ।
पङ्गोस्तुङ्गनगाधिरोहणसुहृद् यत्नोऽयमायास्ततो–
ऽसद्ध्यानव्यसनार्णवे निपतत स्यात्तस्य पोतोऽर्पित ॥"

—पत्तनीयभा० सूची ।

वि स १२२३ वर्षे सूरिपदभृत् वि स १२७७ वर्षे च स्वर्गभाग् जिनपतिसूरिर्जिनवल्लभीयसङ्घपट्टकविवृतिप्रारम्भे प्रवक्ति स्म—

"क्वेमा श्रीजिनवल्लभस्य सुगुरो सूक्ष्मार्थसारा गिर
क्वाह तद्विवृतौ क्षम क्रमजुषा दुर्मेधसामग्रणी ।
द्विद्(ड्)गन्न(?)द्विपदन्तमञ्जनभुजस्तम्भैर्जयश्री क्व नु
प्राप्या सङ्गरमूर्धनि व्यवसित क्वान क्व तल्लिप्सया ॥

१ अग्रे प्रदर्श्यमानजिनदत्तसूरिचरितेऽप्यस्य प्रवादोऽवलोक्यते ।

तथापि तस्यैव पदप्रसाद फलिष्यति द्राक् मम निर्विवाद ।
किमङ्ग ! पङ्गोर्भवनाङ्गणस्पृक् कल्पद्रुम पूरयते न कामान् ? ॥

इह हि सदृशा पदार्थसार्थप्रकटनपटीयसि समूलकापङ्कपितानि शेषदोषे निर्वाणचरमशिखरिशिखरमधिरूढे भगवति भास्वति श्रीमहावीरे, तदनु दुष्पमासमय-भविष्णुदशमाश्चर्यमहादोपान्धकारोदयात् तनिमानमासादयति जिनराजमार्गे, मन्दायमानेषु सदृष्टिषु सात्विकेषु सत्त्वेषु, प्रोज्जृम्भमाणेषु सदालोकवाधेषु तामसेषु, निरङ्कुशमत्तमतङ्ग-जवद् यथेच्छ गर्जत्सञ्चरिष्णुषु प्रमादमदिरामदावदायमानानवद्यविद्यासम्पत्तिषु सातशी-लतया स्वकपोलकल्पनाशिल्पिकल्पितजिनभवननिवासेषु **चौलुक्य**वशमुक्तामाणिक्य—चारुतत्त्वविचारचातुरीधुरीण–विलसदङ्गरङ्गनृत्यन्नीयङ्गनाराञ्जितजगज्जनसमाज—श्री**दुर्लभराज**महाराजसभायाम् अनल्पजल्पजलधिसमुच्छलदतुच्छविकल्पकल्लोलमालाकवलित-वहलप्रतिवादिकोविदग्रामण्या सविग्नमुनिनिवहाग्रण्या सुविहितवसतिपथप्रथनरविणा वादिके-सरिणा श्री**जिनेश्वरसूरिणा** श्रुतियुक्तिभिर्बहुधा चैत्यवासव्यवस्थापन प्रति प्रतिक्षिप्तेष्वपि लाम्पट्याभिनिवेशाभ्या तन्निर्बन्धमजहत्सु यथाच्छन्देषु ततस्तदुत्सूत्रदेशनाविरलगरलल्हरी-चरीकृष्यमाणहृदयभूमिनिहितचेतनाबीजमुदग्रदुर्निग्रहकुग्रहाग्रहशोशुष्यमाणविवेकाङ्कुर नि-र्गलमुखकुहरनि सरद्दुर्वाणाकृपाणीकृत्तधार्मिकमर्माण श्राद्धसङ्घ निरीक्ष्य तदुपचिकीर्षया हृद्यानवद्यसमग्रविद्यावनिताम्बिनाचुम्बितवदनतामरस सान्द्रसवेगशास्त्रार्थरसायनपानवान्त-कामरस सुविहितमुनिचक्रचालशिखामणि सिद्धान्तविपर्यस्तप्ररूपणमहान्धकारनिकारत-रणि सुगृहीतनामधेय प्रणतप्राणिसन्दोहवितीर्णशुभभागधेय चैत्यवासदोपभासन—सिद्धान्ताकर्णनापासितकृतचतुर्गतिससारायासजिनमननवास सर्वज्ञशासनोत्तमाङ्ग**स्थाना**-दिनवाङ्गवृत्तिकृच्छ्रीमद**भयदेवसूरि**पादसरोजमूले गृहीतचारित्रोपसम्पत्ति करुणासु—धातरङ्गिणीतरङ्गरङ्गत्स्वान्त **सुविधिमार्गा**वभासनप्रादु पद्विशदकीर्तिकौमुदीनिपूदितदि-क्सामन्तिनीवदनध्वान्त स्वस्योपसर्गमभ्युपगम्यापि विदुषा दुरध्वविध्वसनमेवाधेयमिति सत्पुरुषपदवीमदवीयसीं विदधान समुज्जितभूरिर्भगवान् श्री**जिनवल्लभसूरिः** मोहान्ध-तमसध्वसनपटिष्ठसत्पथप्रकाशनगरिष्ठरत्नदीपायमान दुर्वामनाशिलामञ्चयवृहाक श्री**सङ्घ-पट्टका**ख्य प्रकरण चिकीर्षु ××"

सङ्घपट्टकविवृतिप्रान्ते—

" **सूरि** श्री**जिनवल्लभो**ऽजनि बुधश्चान्द्रे कुले तेजसा
सन्दर्गोऽ**भयदेवसूरि**चरणाम्भोजालिलीलायित ।

चित्र राजसभासु यस्य कृतिना कर्णे सुधादुर्दिन
तन्वाना विबुधैर्गुरोरपि कवे कैर्न स्तुता सूक्तय ? ॥ १ ॥
हित्वा वाङ्मयपारदृश्वतिलक य दीप्रलोकम्पृण
प्रज्ञानामपि रञ्जयन्ति गुणिना चित्राणि चेतास्यहो ! ।
लुण्टाक्यश्च्युतत द्रचन्द्रमहसामवाप्यविद्यामुप
कस्यान्यस्य मनोरमा सकलदिक्कूलङ्कपा कीर्तय ? ॥ २ ॥
माधुर्यशार्करितशर्करया रयाद् य पीयूषवर्षमिव तर्कगिरा किरन्तम् ।
विद्यानुरक्तवनिताजनितास्यलाम्य हित्वा परत्र न मनो विदुषामरस्त॥३॥"

पञ्चलिङ्गीविवरणप्रान्ते—

" तदनु समभूच्छिष्यस्तस्य प्रभुर्जिनवल्लभो
जगति कवितागुम्फा यस्य द्रवद्रसमन्थरा ।
अनितरकविच्छायापत्या चमत्कृतिचुञ्चवो
न हृदि मधुरा लग्ना कस्य स्मरस्य यथेषव ? ॥ " इत्यादि ।

वि स १२४५ वर्षे जन्मभाजो जिनेश्वरसूरे पिता जिनवल्लभसूरिगुणवर्णनगीतनिर्माता मरुकोट्टनिवासी नेमिचन्द्रभाण्डागारिक इत्थ प्रास्तौत्—

"अज्ज वि गुरुणो गुणिणो सुद्धा दीसंति तडयडा केइ ।
पर जिणवल्लहसरिसो पुणो वि जिणवल्लहो चेव ॥
वयणे वि सुगुरुजिणवल्लहस्स केसिं न उल्लसइ सम्म ।
अह कह दिणमणितेय उल्लयाण हरइ अधत्त ! ॥
दिट्ठा वि के वि गुरुणो हियए न रमंति मुणियतत्ताण ।
के वि पुण अदिट्ठ च्चिय रमंति जिणवल्लहो जेम ॥ "

—षष्टिशतकप्रकरणे ( गा १०७,८,१२९ )

१ तच्छन्देनाग्रेऽपि च नवाङ्गीवृत्तिकर्तुं सुप्रसिद्धस्याभयदेवसूरेरुपादानम्, यच्चरित गणधरसार्धशतकवृत्ति-प्रभावकचरितादौ प्रेक्ष्यते ।

२ 'इति परमार्हतभा० नेमिचन्द्रकृतानि श्रीजिम(न)वल्लु(ल्ल)भसूरिसुगुरुगुणवर्णनागीतानि।'

३ अद्यापि गुरवो गुणिन शुद्धा दृश्यन्ते क्रियाकठोरा केऽपि ।
पर जिनवल्लभसदृश पुनरपि जिनवल्लभ एव ॥
वचनेऽपि सुगुरुजिनवल्लभस्य केषा नोल्लसति सम्यक् ।
अथ कथ दिनमणितेज उलूकाना हरत्यन्धत्वम् ? ॥
दृष्टा अपि केऽपि गुरवो हृदये न रमन्ते ज्ञाततत्त्वानाम् ।
केऽपि पुनरदृष्टा एव रमन्ते जिनवल्लभो यथा ॥

वि स १२७८ वर्षे जयन्तविजयकाव्यकर्ता जिनशेखरसूरिप्रशिष्योऽभयदेवसूरिरिदं पद्यद्वयं व्याजहार—

"तच्छिष्यो **जिनवल्लभः** प्रभुरभूद् विश्वम्भराभामिनी—
भास्वद्भालललामकोमलयश स्तोम शमारामभू ।
यस्य श्री**नरवर्म**भूपतिशिर कोटीररत्नाङ्कुर—
ज्योतिर्जालजलैरपुष्यत सदा पादारविन्दद्वयी ॥
कश्मीरानपहाय स ततहिमव्यासङ्गवैराग्यत
प्रोन्मीलद्गुणसम्पदा परिचिते यस्यास्यपङ्केरुहे ।
सान्द्रामोदतरङ्गिता भगवती वाग्देवता तस्थुषी
धारालामलभव्यकाव्यरचनाव्याजादनृत्यच्चिरम् ॥ "

—जयन्तविजयकाव्यप्रान्ते ।

वि स १२८९ वर्षे जेसलमेरौ धन्य—शालिभद्रचरित्रकार पूर्णभद्रगणिरिदं निजगाद—

---

१ दिक्करि—कुलगिरि—दिनकरपरिमितविक्रमनरेश्वरसमायाम् ।
द्वाविंशतिशतमान शास्त्रमिद निर्मितं जयतु ॥—नि सा

२ वि स ११६१, ११६४ वर्षीयौ नरवर्मनृपसत्ताया सङ्कलितौ शिलालेखौ प्रसिद्धि प्राप्तौ (ए इ भा०२, पृ १८२ ट्रा रो ए सो भा० १, पृ २२६) गूर्जरेश्वरसिद्धराजजयसिंहेन द्वादश वर्षाणि यावत् प्रयुध्य कृच्छ्रेण पराभूतोऽयं मालवपतिर्येद्विषये गूर्जरेश्वरपुरोहित सोमेश्वर इत्यमुद्गिरति स्म—

"क्षिप्त्वा **धारापति** राजशुक्रवत् काष्ठपञ्जरे ।
य काष्ठापञ्जरे कीर्तिराजहंसीं न्यवीविशत ॥
एकैव जगृहे **धारा** नगरी **नरवर्मण** ।
दत्ता येनाश्रुधारास्तु तद्वधूनां सहस्रधा ॥ "

—कीर्तिकौमुदी (स० २, श्लो० ३१–३२)

तथा च वि स १४२२ वर्षे कृष्णर्षिगच्छीयजयसिंहसूरि —

"कर्णस्य मयणल्लाकुक्षिशुक्त्येकमौक्तिकम् ।
तनयो न्यायवान् जज्ञे **जयसिंहो** महीपति ॥
कृत्वा विग्रहमुग्रसैन्यनिवहैर्यो द्वादशाब्दावधि
प्राग्द्वार विदलय्य पञ्चकरिणा भङ्क्त्वा च **धारापुरीम्** ।
बद्ध्वा श्रीनरवर्मभूपमनघ पाशाभिधं [illegible]
कृत्वा स्वं परिपाल्य शासनभरं [illegible] ॥ '

—कुमारपालचरितमहाकाव्य (श्लो० ४०–४१)

" आकर्ण्याभयदेवसूरिसुगुरो सिद्धान्ततत्त्वामृत
येनाज्ञायि न सङ्गतो जिनगृहे वासो यतीनामिति ।
त त्यक्त्वा गृहमेधिगेहवसतिर्निर्दूपणा शिश्रिये
सूरि श्रीजिनवल्लभोऽभवदसौ विख्यातकीर्तिस्तत ॥ "

—जेसलमेरभा०सूची ( पृ २)

वि॰ सं १२९३ वर्षे जिनवल्लभीयद्वादशकुलकाना विवरणकारो जिनपालगणिर्जिनवल्लभमित्थ परिचाययति स्म—

" श्रीमच्चान्द्रकुलाम्बरैकतरणे श्रीवर्धमानप्रभो
शिष्य सूरिजिनेश्वरो मति–वच –प्रागल्भ्यवाचस्पति ।
आसीद् दुर्लभराजराजसदसि प्रत्यापितागारवद्–
वेश्मावस्थितिरागमज्ञमुमुनिव्रातस्य शुद्धात्मन ॥ ३
तस्मादभूद् नवनवाङ्गविवृतिवेधा मेधानिधेस्तनुतरो जिनचन्द्रसूरे ।
सस्थापितानुपमधामजिनेन्द्रपार्श्वः श्रीस्तम्भनपुरवरेऽभयदेवसूरि ॥
अर्थानामूहते स्मातिगहनरचनागूढताभाजि वृत्ते–
ऽशीर्ति युक्ता चतुर्भिश्चतुरतरमतिर्य मुनिविद्यानिधानम् ।
द्रोणाचार्यप्रधानै स्तुत इति मुदितैः पत्तने सङ्घमुख्यै–
र्नून धात्रा धरित्र्या प्रवचनतिलक कौतुकान्निर्ममेऽसौ ॥ ३ ॥

तथा च तदुक्ति —

'आचार्या प्रतिसद्म सन्ति महिमा येषामपि प्राकृते–
र्मातु नाध्यवसायते सुचरितैर्येषा पवित्र जगत् ।
एकेनापि गुणेन किन्तु जगति प्रज्ञाधना साम्प्रत
यो धत्तेऽभयदेवसूरिसमता सोऽस्माकमावेद्यताम् ॥ ४ ॥'
तस्य ख्याति निशम्य श्रुतनिकपनिधेर्गौतमस्येव दूरात
पुर्या श्रीआशि(सि)काया प्रवररजतकृत्स्नेन कच्चोलवर्षे ।
एव विख्यातकीर्ति सितपद(ट)नृपम प्रेषयत् स्व विनेय
त्रैविद्य शान्त–दान्त निशमनविधयेऽभ्यागमस्यास्य पार्श्वे ॥ ६ ॥

---

१ श्रीमत्सूरिजिनेश्वरस्य सुमुनिव्रातप्रभो साम्प्रत
शीघ्र चारुमहाप्रबन्धकवितुर्वास्यात् समारम्भि यत् ।
तमिष्टामधुना ययौ गुण–नवादित्यप्रमाण वर
वर्षे भाद्रपद शि(सि)ते गुभवरे द्वादश्यह पावने ॥ १ ॥—पत्तनीयभा सूची ।

वि स १२७८ वर्षे जयन्तविजयकाव्यकर्ता जिनशेखरसूरिप्रशिष्योऽभयदेव सूरिरिद पद्यद्वय व्याजहार——

"तच्छिष्यो जिनवल्लभः प्रभुरभूद् विश्वम्भरामामिनी–
भास्वद्भालललामकोमलयश स्तोम शमारामभू ।
यस्य श्रीनरवर्मभूपतिशिर कोटीररत्नाङ्कुर–
ज्योतिर्जालजलैरपुष्यत सदा पादारविन्दद्वयी ॥
कश्मीरानपहाय स ततहिमव्यासङ्गवैराग्यत
प्रोन्मीलद्गुणसम्पदा परिचिते यस्यास्यपङ्केरुहे ।
सा द्रामोदतरङ्गिता भगवता वाग्देवता तस्थुषी
धारालामलभव्यकाव्यरचनाव्याजादनृत्यच्चिरम् ॥ "

——जयन्तविजयकाव्यप्रान्ते ।

वि स १२८५ वर्षे जेसलमेरौ धन्य–शालिभद्रचरित्रकार पूर्णभद्रगणिरिद निजगाद–

---

१ दिक्करि–कुलगिरि–दिनकरपरिमितविक्रमनरेश्वरसमायाम् ।
द्वाविंशतिशतमान शास्त्रमिद निर्मित जयतु ॥—नि सा

२ वि स ११६१, ११६४ वर्षीयौ नरवर्मनृपसत्ताया सङ्कलितौ शिलालेखौ प्रसिद्धिं प्राप्तौ (ए इ भा०२, पृ १८२ ट्रा रो ए सो भा० १, पृ २२६) गूर्जरेश्वरसिद्धराजजयसिंहेन द्वादश वर्षाणि यावत् प्रयुध्य कृच्छ्रेण पराभूतोऽय मालवपतिर्यद्विषये गूर्जरेश्वरपुरोहित सोमेश्वर इत्यमुद्गिरति स्म—

"क्षिप्त्वा धारापतिं राजपुङ्गवः काष्ठपञ्जरे ।
य काष्ठपञ्जरे कीर्तिराजहंसीं न्यवीविशत ॥
एकेन जगृहे धारा नगरी नरवर्मण ।
दत्ता येनाश्रुधारास्तु तद्वधूना सहस्रधा ॥ "

—कीर्तिकौमुदी (स० २, श्लो० ३१–३२)

तथा च वि स १४२२ वर्षे कृष्णर्षिगच्छीयजयसिंहसूरि —

' कण्ठस्य मयणल्लासुतक्षितिभृत्कण्ठकमौक्तिकम् ।
तनयो न्यायवान् तस्य जयसिंहो महीपति ॥
कृत्वा विग्रहमुग्रमेव नियतैर्यो द्वादशाब्दक्रम
प्राग्द्वार विदलय्य पट्टकरिणा भङ्क्त्वा च धारापुरीम् ।
बद्ध्वा श्रीनरवर्मभूपमदपातालवमार्गिन
कण्ठे स्वं परिधाप्य दाममतुलं कीर्त्यतिरामद ॥ "

—कुमारपालचरित्रमहाकाव्य (श्लो० ४०–४१)

" सुविहितसूत्रधारो जयति **जिनवल्लभो** गणि ।
येन **पिण्डविशुद्धि**प्रकरणमकारि चारित्रभवनम् ॥ × ×

तत्र विशुद्धसिद्धान्तसुधासारणि श्री**जिनवल्लभगणिः** संक्षिप्तरुचीनामनुग्रहार्थं संगृह्य यतीनामाहारदोषोद्धरणं **पिण्डविशुद्धि**प्रकरणं चिकीर्षु × ×

—पि वि दीपिकाप्रारम्भे ।

इति विविधविलसदर्थसुविशुद्धाहारमहितसाधुजनम् ।
श्री**जिनवल्लभ**रचितं प्रकरणमेतन्न कस्य मुदे ? ॥
मादृश इह प्रकरणे महार्थपट्टक्तौ विवेश बालोऽपि ।
यद्वृत्त्यङ्गुलिलग्नस्त श्रयत गुरुं **यशोदेवम्** ॥ "

—पि वि दीपिकाप्रान्ते ( पत्तनीयभा० सूची )

वि स **१२९५** वर्षे सुमतिगणिना विरचितायां गणधरसार्धशतकबृहद्वृत्तौ प्रादर्शीत्थं **श्रीजिनवल्लभसूरेश्चरितम्—**

" पूज्या श्री**अभयदेवसूरयः** श्री**पत्तन**मलञ्चक्रिरे । नूनमेत एव कुशाग्रीयमतयो निखिलसिद्धान्तपारगा सुविहितचक्रवर्तिनो युगप्रवरा सविग्नव्रतिव्रातप्रामण्य पुण्यपात्रमित्यादि प्रसिद्धिं प्राप्ता सर्वत्र महीमण्डले ।

**बाल्ये बुद्धि, दीक्षा, विद्याभ्यास**

इतश्च तस्मिन् समये **आसिका**भिधानदुर्गवासी देवगृहनिवासी **कूर्चपुरीयो जिनेश्वरा**चार्य आसीत् । तत्र ये श्रावकपुत्रास्ते सर्वेऽपि तस्य मठे पठन्ति । तत्र च **जिनवल्लभ**नामा श्रावकपुत्रोऽस्ति । तस्य जनको दिवं गतस्तं जननी प्रतिपालयति । पाठयोग्यश्चासौ प्रक्षिप्तस्तया तत्र मठे पठितुम् । सर्वेभ्यश्छात्रेभ्यस्तस्याधिकं पाठ आगच्छति । अथ कथञ्चित् तेन **जिनवल्लभ**चट्टेन बहिर्गच्छता टिप्पनकमेकं प्राप्तम् । तत्र च विद्याद्वयं लिखितमस्ति सर्पाकर्षणी सर्पमोचनी च । ततः कण्ठगतां कृत्वा यावत् प्रथमा विद्या प्रत्ययाय पठिता, तावत् स्फटाटोपभीषणा फूत्कुर्वाणाश्चञ्चल्लोलजिह्वायुगला स्फुरदरुणलोचना सर्वाभ्यो दिग्भ्य आगच्छन्तो विद्याप्रभावाकृष्टा [ दृष्टा ] महानागाः । निर्भयचेतसा चिन्तितं तेन नूनं सप्रत्ययेयं विद्या । पुनरुच्चारिता द्वितीया, तस्याः प्रभावेण पुनः पश्चामुखाश्चलिताश्चक्षुःश्रवसः । एतच्च तत्स्वरूपं श्रुतं सूरिणा, ज्ञातं च निश्चितं सात्त्विकः पुण्या(गुणा)धिको गुण(पुण्य)पात्रमेष तस्मादात्ममात् कर्तुं युक्त इति । ततस्त

१ शर-निधि-दिनकरमङ्ख्ये विक्रमवर्षे गुरौ द्वितीयायाम् ।
राधे पूर्णीभूता वृत्तिरियं नन्दतात् सुचिरम् । – जमलमेरभा०सूची ( अप्र०पृ० ५०, पृ० ३९ )

शिष्योऽथ स श्रीजिनवल्लभाख्यश्चैत्यासिन सूरिजिनेश्वरस्य ।
प्राप्य प्रसन्नोऽभयदेवसूरिं ततोऽग्रहीज्ज्ञानचरित्रचर्याम् ॥ ७ ॥
शुभगुरुपदसेवाऽऽप्तसिद्धान्तसारानगतिगलितचैत्यावासमिथ्यात्वभार ।
गृहिगृहवसतिं स स्वीचकारातिशुद्ध्या सुविहितपदवीमद्गाढसंवेगरङ्ग ॥ ८ ॥
तथाऽस्य सविग्नशिरोमणेरभूमन प्रसन्न सकलेषु जन्तुषु ।
जिनानुकृत्या भुवन विबोधयन् यथा न शश्राम महामना स्वयम् ॥ ९ ॥
धर्मोपदेशकुलकाङ्कितसारलेखै श्राद्धेन वन्धुरधिया गणदेवनाम्ना ।
प्राबोधयत् सकलवाग्जडदेशलोक सूर्योऽरुणेन कमल किरणैरिव स्वै ॥ १० ॥
तानि द्वादश विस्तृतानि कुलकान्यम्भोधिवद् दुर्गमा-
न्यत्यन्त च गभारभूरिसुपदान्युन्निद्रितार्थाणि च ।
व्याख्यातु य उपक्रम कृशधियाऽप्याधायते मादृशे—
नारोढु तदमर्त्यशैलशिखर प्रागल्भ्यत पङ्गुना ॥ ११ ॥
एव श्रीजिनवल्लभस्य सुगुरोश्चारित्रिचूडामणे-
र्भव्यप्राणिनिबोधने रसिकता वाक्याद्भुता शाश्वतीम् ।
आदेशाद् गुणनिम्नवाङ्निवृतिप्रस्तावकस्यादरात्
प्रादात् सूरिपद मुदञ्चितवपु श्रीदेवभद्रप्रभु ॥ १२ ॥

द्वादशकुलकविवृतिप्रान्ते—

जयति सन्देहलतासिधारा श्रोत्रप्रमोदामृतवारिधारा ।
सूरेर्गिर श्रीजिनवल्लभस्य प्रहीणपुण्याङ्गिसुदुर्लभस्य ॥ १ ॥
आसन्नत्र मुनीश्वरा सुनहवश्चारित्रलक्ष्म्यास्पद
स्तोका श्रीजिनवल्लभेन सदृशा निर्भीकवाग्विस्तरा ।
सङ्ग्रामे गहनेऽपि भूरिसुभटश्रेण्या वरे भारते
तुल्या श्रीजितराजिना विजयिनो वीरा कियन्तोऽभवन् ॥ २ ॥

—पत्तनीयभा० सूचा ।

अनेनैव जिनपालगणिना वि स १२९४ वर्षे विरचितायां चर्चरीविवृतौ जिन वल्लभसूरिमधिकृत्य यत् प्रोचे, तत् त्वत्र साक्षादेवेति न पुनरुद्ध्रियते ।

वि स १२९५ वर्षे जिनवल्लभीयपिण्डविशुद्धिदीपिकाकार उदयसिंहसूरिरिद-मुदगिरत्—

१ विक्रमतो वर्षाणां पञ्चनवत्यधिकरवि[illegible]तु ।
रचितेव श्रीः[illegible] सुवधुना [illegible] ॥
—पि वि दीपिकान्ते ( पत्तनीयभा० सूची )

" सुविहितसूत्रधारो जयति **जिनवल्लभो** गणि ।
येन **पिण्डविशुद्धि**प्रकरणमकारि चारित्रभवनम् ॥ × ×

तत्र विशुद्धसिद्धान्तसुधासारणि **श्रीजिनवल्लभगणिः** संक्षिप्तरुचीनामनुग्रहार्थं संगृह्य यतीनामाहारदोषोद्धरणं **पिण्डविशुद्धि**प्रकरणं चिकीर्षु × ×

—पि वि दीपिकाप्रारम्भे ।

इति विविधविशिष्टसन्दर्भसुविशुद्धाहारमहितसाधुजनम् ।
श्रीजिनवल्लभरचितं प्रकरणमेतन्न कस्य मुदे ? ॥
मादृशा इह प्रकरणे महार्थपदवृत्तौ विवेश बालोऽपि ।
यद्वृत्त्यङ्गुलिलग्नस्तं श्रयत गुरुं **यशोदेवम्** ॥ "

—पि वि दीपिकाप्रान्ते ( पत्तनायभा० सूची )

वि स १२९५ वर्षे सुमतिगणिना विरचितायां गणधरसार्धशतकबृहद्वृत्तौ प्रादर्शीत्य **श्रीजिनवल्लभसूरेश्चरितम्**—

" पूज्या श्री**अभयदेवसूरयः** श्री**पत्तन**मलञ्चक्रिरे । नूनमेत एव कुशाग्रीयमतयो निखिलसिद्धान्तपारगाः सुविहितचक्रवर्तिनो युगप्रवराः संविग्नव्रतिव्रातप्रामण्यपुण्यपात्रमित्यादि प्रसिद्धिं प्राप्ताः सर्वत्र महीमण्डले ।

बाल्ये बुद्धि, दीक्षा, विद्याभ्यास

इतश्च तस्मिन् समये **आसिका**भिधानदुर्गवासी देवगृहनिवासी **कूर्चपुरीयो जिनेश्वरा**चार्य आसीत् । तत्र ये श्रावकपुत्रास्ते सर्वेऽपि तस्य मठे पठन्ति । तत्र च **जिनवल्लभ**नामा श्रावकपुत्रोऽस्ति । तस्य जनको दिवं गतस्तं जननी प्रतिपालयति । पाठयोग्यश्चासौ प्रक्षिप्तस्तया तत्र मठे पठितुम् । सर्वेभ्यश्छात्रेभ्यस्तस्याधिकः पाठ आगच्छति । अथ कदाचित् तेन **जिनवल्लभ**छात्रेण बहिर्गच्छता टिप्पनकमेकं प्राप्तम् । तत्र च विद्याद्वयं लिखितमस्ति सर्पाकर्षणी सर्पमोचनी च । ततः कण्ठगतां कृत्वा यावत् प्रथमा विद्या प्रत्ययाय पठिता, तावत् स्फटाटोपभीषणाः स्फुरन्नीलाश्चञ्चल्ललज्जिह्वायुगला स्फुरद्दारुणलोचनाः सर्वाभ्यो दिग्भ्य आगच्छन्तो विद्याप्रभावाकृष्टा [ दृष्टा ] महानागाः । निर्भयचेतसा चिन्तितं तेन नूनं सप्रत्ययेयं विद्या । पुनरुच्चारिता द्वितीया, तस्याः प्रभावेण पुनः पश्चान्मुखाश्चलिताश्चक्षुःश्रवसः । एतच्च तत्स्वरूपं श्रुतं सूरिणा, ज्ञातं च निश्चितं सात्त्विकः पुण्या(गुणा)धिको गुण(पुण्य)पात्रमेष तस्मादात्मसात् कर्तुं युक्त इति । ततस्त

१ शर-निधि-दिनकरसङ्ख्ये विक्रमवर्षे गुरौ द्वितीयायाम् ।
राधे पूर्णीभूता वृत्तिरियं नन्दतात् सुचिरम् । – जसलमेरभा०सूची ( अप्र०पृ० ५०, पृ० १९ )

द्राक्षा–खर्ज्जूराक्षोटक–खण्डमण्डक–खण्डमोदकादिदानपुरस्सर वशीकृत्य तन्मातर मधुरवचनै सम्बोधयामास यदुतैप त्वदीयपुत्रोऽत्यन्त प्रज्ञ स्फू(मू)र्तिमान् सात्त्विक किं बहुना ? आचार्यपदयोग्योऽस्ति, तदेनमस्मभ्य प्रयच्छ । एषा तावकीना धर्मदेवकुलिका तवान्येषा च निस्तारको भविष्यत्यत्रार्थे नान्यथा किञ्चिद् वक्तव्यमित्यभिधाय द्रम्मशत-पञ्चक तस्या हस्ते प्रक्षिप्य क्षिप्र दिदीक्षे **जिनवल्लभो**ऽध्यापितस्तेन समस्ता लक्षण-च्छन्दोऽलङ्कार–क(तर्क)–ग्रहगणितादिका निरवद्या विद्या ।

शोधकबुद्धि सिद्धान्त पठनार्थं गमनम् वाचनाचार्यपदम्, प्रतिष्ठादि

कदाचित् तस्याचार्यस्य ग्रामादौ प्रयोजनमुपतस्थे । ततो गच्छता पण्डितो **जिन-वल्लभो** भणित(तो भो)स्तावत् त्वया सर्वाऽपि चिन्ता कर्तव्या, यावत् प्रयोजनमनुशील्याहमागच्छामि । विनयप्रणतोत्तमाङ्गेन **जिनवल्ल-भेनो**क्तम्–' पूज्यैर्यथाऽऽदिष्ट तथा विधास्ये, परमाराध्यै कार्य निष्पाद्य शीघ्रमागन्तव्यम्' इति । गतोऽसौ ग्रामान्तरे (रम्)। ततो द्वितीयेऽह्नि चिन्तित **जिनवल्लभेन** यदुत भाण्डागारमध्ये मञ्जूषा पुस्तकभृता दृश्यते । तदेतेषु पुस्तकेषु किमस्ति विभालयामि यतस्तद्वश सर्वं जातमस्तीत्युच्छोटितमेक पुस्तक तच्च सिद्धान्तसत्कम् । तत्रोक्त पश्यति–' साधुना द्विचत्वारिंशद्दोषविशुद्धपिण्डेन गृहस्थ-गृहेभ्यो मधुकरवृत्त्या गृहीतेन सयमनिर्वाहहेतवे देहधारणा कर्तव्या । न कल्पते यतीना सचित्तपुष्प–फलादिक हस्तेनापि स्प्रष्टु किमङ्गाहारयितुम् ? न युक्त एकत्र निवासो मुनीनामित्यादि विचारान् दृष्ट्वा मनसा विस्मितश्चिन्तयामास । अहो ! अन्य एव स कश्चिद् व्रताचारो येन मुक्तौ गम्यते, विसदृशस्त्वस्माकमेष समाचार स्फुट दुर्गतिगर्त्तीया निपततामेतेन न कश्चिदाधार इति चेतस्यालोच्य गम्भीरवृत्त्या पुस्तकादिक यथास्थिति कृत्वा गुरूक्तरीत्या स्थित । कतिपयदिनानन्तरम(र)कृतकार्यस्तत समागत आचार्यश्चिन्तयति किमपि स्थान न हीन जातम् । यावज्जिनवल्लभेन मठ–वाटिका–विहार–द्रव्यसम्भार–कोष्ठागारप्रभृति सर्वं त्रातम, तस्माद् यथा योग्यश्चिन्तितस्तथा निश्चितमेष भविष्यति, किन्तु सिद्धान्त विना शेषा अशेषा अपि तर्कालङ्कारादिविद्या अनेनाभ्यस्ता सिद्धान्तश्च यथावस्थित सम्प्रतितनकालापेक्षया सम्पूर्ण साम्प्रत श्रीअभयदेवसूरिसमीपे श्रूयते तत् सिद्धान्तवाचनाग्रहणार्थं तत्पार्श्वे जिनवल्लभ प्रेषयामि । गृहीतायां तु सिद्धान्तवाच नायां समस्तविद्यानितम्बिनीवल्लभ [ जिनवल्लभ ] स्वपदे सस्थापयिष्यामीति परिभाव्य वाचनाचार्य पदं दत्त्वा विधिवत्ततोऽनेतभोजनादियुक्तिं च विधाय जिनशेखराभिधानद्वि तीयशिष्यसहायं जिनवल्लभ श्रीअभयदेवाचार्यसमीपे प्रेषितवान्। मरुकोट्ट

**मध्येनाणहिल्लपाटक** गच्छता रात्रौ तत्र **मरुकोट्टे माण**श्रावककारितजिनभवने प्रतिष्ठा विदधे ।

तत **पत्तने** प्राप्त, **श्रीअभयदेव**सूरिवसतिं पृष्ट्वा प्रविष्ट । तत्र दृष्टो भगवास्तीर्थंकरप्रतिरूप सन्निकृष्टोपविष्ट[विशिष्ट]सिद्धान्तवाचनार्थिप्रचुराचार्यं स्वागमैभवावधूतदेवाचार्यं भक्तिवशोल्लसितवहलरोमाञ्चकञ्चुकिका(ता)ञ्चितकायलतिकेन वन्दितस्तेन । ततो गुरुणा दर्शनमात्रेणैव योग्यो विशुद्धात्मफलक इव कश्चिदयं दृश्यते इति परिभाव्य मधुरवाण्या पृष्ट कुतो भवान् ? किं च भवत प्रयोजनमा[गम]नस्य ? । ततो [नि]योजितकरकुड्मलेन भगवद्दर्शनोद्भूतप्रभूतनिरुपमानबहुमानजल[द]पटलनिर्धौतान्तर्मलेन वचनामृतचारिमान्यकृतामृतनिर्मितरोहिणावल्लभेन जगदे गणि**जिनवल्लभेन**–'भगवन् ! निजाखण्डलक्ष्मीप्रकर्षेण स्व पुरीदासिकाया समागतस्ता[व]त् श्रीमदा**सिकाया** । **श्रीजिनेश्वरसूरिणा** स्वगुरुणा प्रेषितस्य मम मधुकरविभ्रमस्य यौष्माकीणवक्त्राम्भोज[विलिनसिद्धान्तरसपिपासितस्य मति सकलजनमनस्कामनाकल्पतरूणा भवता पार्श्वे सिद्धान्तवाचनामध्येतु व्यवस्यति । तत –] 'कालम्मि आगए विऊ अपत्त च न वाइज्जा पत्त च न विमाणए ।'[1] इति विचिन्त्याभिहितम्–युक्त विहित भवता यत् सिद्धान्तवाचनाभिप्रायेणात्र समागत । तत प्रधानदिने वाचना दातुमारब्धा । यथा यथा सुगुरुर्जिनवचनवाचना ददाति तथा तथा प्रमुदितचित्त सन् स सुशिष्य सुधारसमिव तामास्वादयति । हर्षोत्फुल्लपद्मदृश त तादृश शिष्यमभिवीक्ष्य गुरवोऽपि तोषपोषद्विगुणाकृतवाचनादानोत्साहा बभूवु । किं बहूक्तेन ? तथा तथा ज्ञापनबुद्ध्या श्रीपूज्या वाचना तस्मै दातु प्रवृत्ता यथा स्तोकेनैव कालेन सिद्धान्तवाचना परिपूर्णा जाता ।

पत्तनेऽभयदेवसूरिपार्श्वे सिद्धान्ताभ्यास

तथा गुरोर्ज्योतिषिक एक पूर्वप्रतिपन्न आसीद् 'यदि भवता कश्चिद् योग्य शिष्यो भवेत्, तदाऽसौ मह्य समर्पणीयो येन तस्मै समग्रज्योतिष समर्पयामि' । तत पूज्यैर्**जिनवल्लभगणि** समर्पित । तेनापि **जिनवल्लभाय** ज्योतिष सुपरिज्ञान प्रदत्तम् ।

ज्योतिष पठनम्

एव च गृहीतसिद्धान्तवाचन सिद्धान्तोक्तक्रियासम्यगनुष्ठानबद्धमानस ममधिगतसरस्फूर्तिज्योतिष स्वगुरो समीपे गमनाय मुत्कलनवचन प्रभूत शिक्षा मिच्छति । प्रभुभिरभिहितम्- 'वत्स ! सिद्धान्तोक्तसाधुसमाचार स्तावत् समस्तोऽपि त्वयाऽवगतोऽतस्तदनुसारेण यथा वर्तसे तथा विधेयम् । ' श्रीजिन-

प्रस्थाने सिद्धान्तगुरो शिक्षा

१ 'काले आगत विद्वान् अपात्र च न वाचयेन् पात्र च न विमानयत् ।'

**वल्लभगणिना** पादयोर्निपत्य भणितम्—' यथा श्रीपूज्यपादा आज्ञापयन्ति, तथैव निश्चित प्रवर्तिष्ये ' ।

प्रधानादिने चलितो यथाऽऽगतमार्गेण पुन**र्मरुकोट्टे** प्राप्त । आगच्छता सिद्धान्तानुसारेण देवगृहे विधिर्लिलिखे । येन विधिनाऽविधिचैत्यमपि मुक्ति साधन **विधिचैत्य** स्यात् । स चायम्—

दीक्षागुरुमीलनम्, मार्ग विधि प्रकाश

" अत्रोत्सूत्रजनक्रमो न च न च स्नात्र रजन्या सदा
साधूना ममताऽऽश्रयो न च न च स्त्रीणा प्रवेशो निशि ।
जाति—ज्ञातिकदाग्रहो न च न च श्राद्धेषु ताम्बूलमि—
त्याज्ञाऽत्रेयमनिश्रिते **विधिकृते** श्रीजैनचैत्यालये ॥ १ ॥ "

इत्यादिविधिर्विधेयो येन सर्व चैत्यवन्दनाद्यनुष्ठान मुक्तये सम्पद्यत इति । ततोऽसौ स्वगुरुसमीपे गन्तु प्रवृत्त प्राप्तो **माइयडग्रामे आसिकादुर्गादर्वाक्** क्रोशत्रये स्थित । तत्रैव गुरुमीलनाय पुरुष प्रेषितस्तस्य हस्ते लेखो दत्तो यथा-'युष्मत्प्रसादेन सुगुरुसमीपे वाचना गृहीत्वा **माइयडग्रामे**ऽह समागतोऽस्मि । पूज्यै प्रसाद कृत्वाऽत्रैवागत्य मम मीलनीयम् ।' ततो गुरुभिरज्ञायि—'किमिति **जिनवल्लभे**नेत्थ निर्दिष्टम् ?, नात्रागतोऽभवत्' । ततो द्वितीयदिने सकललोकेन सार्धं समायात आचार्य, अभिमुख गतो **जिनवल्लभ**, प्रणतो गुरु, पृष्टा क्षेमवार्ता गुरुणा, कथिता यथोक्ता सर्वाऽपि वार्ता । तेन ब्राह्मणसमाधाननिमित्त मेघादिस्वरूपाणि तथा ज्योतिषबलेन भणितानि कानिचिद् यथा गुरोरप्याश्चर्यकारीणि जातानि । ' भूतपूर्वकस्तद्वदुपचार ' इति न्यायात् गुरोरित्युक्तम् ।

[ तत ] पृष्टो गुरुणा—'किमिति मन्ये त्व नागत ?' । **जिनवल्लभगणिना**ऽभिहितम्—' भगवन् ! सुगुरुमुखाज्जिनवचनामृत पीत्वा कथमधुना दुर्गतिगुप्तात्मन समुपचितपाश चैत्यवास विषवृक्षसदृश सेवितुमिच्छामि ? ।' ततो गुरुणा भणितम्—'भो **जिनवल्लभ** ! मयेद चिन्तितमासीद् यत् तुभ्य स्वपद दत्त्वा त्वयि स्वगच्छ—देवगृह—श्रावकाधिचिन्ता निवेश्य पश्चात् स्वय सद्गुरुपार्श्वे वसतिमार्गमङ्गीकरिष्ये' । ततो **जिनवल्लभगणिना** विकस्वरवदनारविन्देन भणितम्—'भगवन् ! अतीव शोभनमेतद्, विवेकस्य हीदमेव फलम्, यद् हेयपरित्यागेनो पादेयमुपादीयते । तर्हि समन्वमेव सुगुरुसमीपे गम्यते । गुरुणोपनि क्षस्य प्रत्यपादि यदुत—'वत्स ! ईदृशी नि स्पृहता नास्त्यस्माकम्, यया चिन्ताकरणसमर्थ पुरुष विना

चैत्यवासत्याग

स्वगच्छ–देवगृह–वाटिकाऽऽदिचिन्ता मुक्त्वा सुगुरुपार्श्वे [व]सतिवासमङ्गीकुर्महेऽवश्य भवता विधा[तव्य] वसतिवसनम्' । श्रीजिनवल्लभगणिः–'भगवन् ! एवम्' । ततो गुरुभ्यर्धुव्यासिकाया सम्प्राप्त ।

श्रीजिनवल्लभगणिरपि तत्सम्मतेन श्रीपत्तने विजहार, श्रीमदभयदेवसूरिपादान् बह्वादरेण वन्दितवान् । सद्गुरूणामतिशयेन समाधान समजनि, चिन्तित च यथा परीक्षितस्तथैवैष जज्ञे । ततो मनसि विदन्तोऽपि न कस्यापि प्रतिपादयन्ति यदुतैष एवास्मत्पदयोग्य । यतो देवगृहनिवासिशिष्य इति हेतोर्गच्छस्य सम्मत न भविष्यतीति । ततो गच्छाधारको वर्धमानाचार्यः स्वपदे निवेशितो जिनवल्लभगणेश्च स्वक्षायोपसम्पद दत्तवन्त इत्यद्यप्रभृत्यस्मदाज्ञया सर्वत्र प्रवर्तितव्यमिति । एकान्ते पुन प्रसन्नचन्द्राचार्यो भणितो मदीयपदे भव्यलग्ने जिनवल्लभगणिः स्थापनीय इति । एव नवाङ्गीवृत्तिं वर्तनीमिव मुक्तिनगरस्य भव्यजनेभ्य प्रतिपाद्य सिद्धान्तोक्तविधिना समाधानेन देवलोक गता श्रीअभयदेवसूरयः । प्रसन्नचन्द्राचार्यस्यापि सुगुरुपदनिवेशनप्रस्तावो न जातस्ततस्तेनापि स्वायु परिसमाप्तिसमये श्रीदेवभद्राचार्याणा विज्ञप्तम् 'यत् सुगुरूपदेशो युष्माभिरेव सफलीकार्योऽवश्यमेव, मया कर्तु न शकित '। तत [तैरपि] प्रतिपन्नम्–'वर्तमानयोगेनैव करिष्याम, समाधान भवद्भिर्विधेयमिति' ।

अभयदेवसूरेः स तोष, गुरुपदम्

श्रीजिनवल्लभगणिर्वाचनाचार्योऽपि कानिचिद् दिनानि पत्तनभूमौ विहृत्य न तादृशो विशेषेण बोध कस्याप्यत्र गूर्जरत्रामण्डले विधातु शक्यते, येन समाधानमुत्पद्यते मनसीति मनसिकृत्यात्मतृ(द्वि)ताय आगमविधिना सुशकुनेन भव्यजनमन सुक्षेत्रभूमिकासु भगवद्भणितत्रिविधधर्मबीजनिक्षेपणार्थं श्रीमेदपाटदेशादिषु विहार चकार । ते च देशा सर्वेऽपि प्रायेण चैत्यनिवास्याचार्यैर्व्यामा, सर्वोऽपि लोकस्तद्वासितो वर्तते ।

गूर्जरत्रा–मेदपाटादिषु विचरणम्

किं बहुना ? तादृशदेशान्तरस्थनानाग्राम–नगरादिषु विहार विदधानश्चित्रकूटाचलदुर्गे प्राप्त । यद्यपि तत्र यत्सुद्रैर्भाषितो लोकस्तत्राप्ययुक्त किमपि कर्तुं न शक्नोति श्रीपत्तने श्रीगुरूणा महत्या प्रसिद्धे श्रवणात् । ततो जिनवल्लभगणिना स्थान याचितास्तत्रत्यश्राद्धा । तैश्चोक्तम्–'चण्डिकामठोऽस्ति, यदि तत्र तिष्ठथ(त)' । ततो जिनवल्लभगणिना ज्ञातम्–'दुष्टाभिप्रायेणते भणन्ति, तथापि तत्रापि स्थितस्य देवगुरुप्रसादाद् भद्र भविष्यति' इति चिन्तयित्वा भणितास्ते 'तत्रैव बहु मन्यन्व यूय येन तिष्ठाम' तैरुक्तमतात सम्मतमस्माक तिष्ठत यूयम् ।

चित्रकूटे चण्डिकारक्षा

**वल्लभगणिना** पादयोर्निपत्य भणितम्–' यथा श्रीपूज्यपादा आज्ञापयन्ति, तथैव निश्चित प्रवर्तिष्ये ' ।

प्रधानादिने चलितो यथाऽऽगतमार्गेण पुनर्**मरुकोट्टं** प्राप्त । आगच्छता सिद्धा तानुसारेण देवगृहे विधिर्लिलिखे । येन विधिनाऽविधिचैत्यमपि मुक्तिसाधन **विधिचैत्य** स्यात् । स चायम्—

दीक्षागुरुमीलनम्, मार्गे विधि प्रकाश

"अत्रोत्सूत्रजनक्रमो न च न च स्नात्र रजन्या सदा
साधूना ममताऽऽश्रयो न च न च स्त्रीणां प्रवेशो निशि ।
जाति–ज्ञातिकदाग्रहो न च न च श्राद्धेषु ताम्बूलमि–
त्याज्ञाऽत्रेयमनिश्रिते **विधिकृते** श्रीजैनचैत्यालये ॥ १ ॥"

इत्यादिविधिर्विधेयो येन सर्व चैत्यवन्दनाद्यनुष्ठान मुक्तये सम्पद्यत इति । ततोऽसौ स्वगुरुसमीपे गन्तु प्रवृत्त प्राप्तो **माइयड**ग्रामे **आसिकादुर्गादर्वाक्** क्रोशत्रये स्थित । तत्रैव गुरुमीलनाय पुरुष प्रेषितस्तस्य हस्ते लेखो दत्तो यथा-'युष्मत्प्रसादेन सुगुरुसमीपे वाचना गृहीत्वा **माइयड**ग्रामेऽह समागतोऽस्मि । पूज्यै प्रसाद कृत्वाऽत्रैवागत्य मम मीलनीयम् ।' ततो गुरुभिरज्ञायि–'किमिति **जिनवल्लभे**नेत्थ निर्दिष्टम् ?, नात्रागतोऽभवत्' । ततो द्वितीयदिने सकललोकेन सार्धं समायात आचार्य, अभिमुख गतो **जिनवल्लभ**, प्रणतो गुरु, पृष्टा क्षेमवार्ता गुरुणा, कथिता यथोक्ता सर्वाऽपि वार्ता । तेन ब्राह्मणसमाधाननिमित्त मेघादिस्वरूपाणि तथा ज्योतिषबलेन भणितानि कानिचिद् यथा गुरोरप्याश्चर्यकराणि जातानि । 'भूतपूर्वकस्तद्वदुपचार' इति न्यायात् गुरोरित्युक्तम् ।

चैत्यवासत्याग

[ तत ] पृष्टो गुरुणा–'किमिति मध्ये त्व नागत ?' । **जिनवल्लभगणिना**ऽभिहितम्–'भगवन् ! सुगुरुमुखाज्जिनवचनामृत पीत्वा कथमधुना दुर्गतिगुप्तावात्मन ममुपचितपाश चैत्यवास विषवृक्षसदृश सेवितुमिच्छामि ?।' ततो गुरुणा भणितम्–'भो **जिनवल्लभ** ! मयेद चिंतितमासीत् यत् तुभ्य स्वपद दत्त्वा त्वयि स्वगच्छ–देवगृह–श्रावकादिचिन्ता निवेश्य पश्चात् त्वय सद्गुरुपार्श्वे यमातिमार्गमङ्गीकरिष्ये' । ततो **जिनवल्लभगणिना** विकस्वरवदनारविन्देन भणितम्–'भगवन् ! अतीव शोभनमेतद्, विवेकस्य ह्येतदेव फलम्, यद् हेयपरित्यागेनोपादेयमुपादीयते । तर्हि समकमेव सुगुरुसमीपे गम्यते । गुरुणोक्तं निश्चय प्रतिपादि यदुत–'वत्स ! ईदृशी निःस्पृहता नास्त्यस्माकं, यथा चिराचरणमयं पुरुष विना

-स्वगच्छ-देवगृह-वाटिकाऽऽदिचिन्ता मुक्त्वा सुगुरुपार्श्वे [व]सतिवासमङ्गीकुर्महेऽत्रस्य भवता विधा[तव्य] वसतिवसनम्' । श्रीजिनवल्लभगणिः-'भगवन्! एवम्' । ततो गुरुर्व्याघुट्यासिकाया सम्प्राप्त ।

श्रीजिनवल्लभगणिरपि तत्सम्मतेन श्रीपत्तने विजहार, श्रीमदभयदेवसूरिपादान् बह्वादरेण वन्दितवान् । सद्गुरूणामतिशयेन समाधान समजनि, चिन्तित च यथा परीक्षितस्तथैवैष जज्ञे । ततो मनसि विदन्तोऽपि न कस्यापि प्रतिपादयन्ति यदुतैष एवास्मत्पदयोग्य ।

अभयदेवसूरे सन्तोष, गुरुपदम्

यतो देवगृहनिवासिशिष्य इति हेतोर्गच्छस्य सम्मत न भविष्यतीति । ततो गच्छाधारको वर्धमानाचार्यः स्वपदे निवेशितो जिनवल्लभगणेश्च स्वकीयोपसम्पद दत्तवन्त इत्यद्यप्रभृत्यस्मदाज्ञया सर्वत्र प्रवर्तितव्यमिति । एकान्ते पुन प्रसन्नचन्द्राचार्यो भणितो मदीयपदे भव्यलग्ने जिनवल्लभगणिः स्थापनीय इति । एव नवाङ्गीवृत्ति वर्तनीमिव मुक्तिनगरस्य भव्यजनेभ्य प्रतिपाद्य सिद्धान्तोक्तविधिना समाधानेन देवलोक गता श्रीअभयदेवसूरयः । प्रसन्नचन्द्राचार्यस्यापि सुगुरुपदानिवेशनप्रस्तावो न जातस्ततस्तेनापि स्वायु परिसमाप्तिसमये श्रीदेवभद्राचार्याणा विज्ञप्तम् 'यत् सुगुरूपदेशो युष्माभिरेव सफलीकार्योऽवश्यमेव, मया कर्तु न शकित '। तत [तैरपि] प्रतिपन्नम्-' वर्तमानयोगेनैव करिष्याम, समाधान भवद्भिर्विधेयमिति' ।

श्रीजिनवल्लभगणिर्वाचनाचार्योऽपि कतिचिद् दिनानि पत्तनभूमौ विहृत्य न तादृशो विशेषेण बोध कस्याप्यत्र गूर्जरत्रामण्डले विधातु शक्यते, येन समाधानमुत्पद्यते मनसीति मनसिकृत्यात्मतृ(द्वि)ताय आगमविधिना सुश्रावकुलेषु भव्यजनमन सुक्षेत्रभूमिकासु भगवद्भणितविधिधर्मबीजनिक्षेपणार्थ श्रीमेदपाटदेशादिषु विहार चकार । ते च देशा सर्वेऽपि प्रायेण चैत्यनिवास्याचार्यैर्व्याप्ता, सर्वोऽपि लोकस्तद्वासितो वर्तते।

गूर्जरत्रा-मेदपाटादिषु विचरणम्

किं बहुना ? तादृशदेशान्तरस्थनानाग्राम-नगरादिषु विहार विदधानश्चित्रकूटाचलदुर्गे प्राप्त । यद्यपि तत्रत्यैर्दुर्भावितो लोकस्तत्राप्ययुक्त किमपि कर्तु न शक्नोति श्रीपत्तने श्रीगुरूणा महत्या प्रसिद्धे श्रवणात्।

चित्रकूटे चण्डिकारक्षा

ततो जिनवल्लभगणिना स्थान याचितास्तत्रत्यश्राद्धा । तैश्चोक्तम्-'चण्डिकामठोऽस्ति, यदि तत्र तिष्ठथ(त)' । ततो जिनवल्लभगणिना ज्ञातम्-'दुष्टाभिप्रायेणैते भणन्ति, तथापि तत्रापि स्थितस्य देवगुरुप्रसादाद् भद्र भविष्यति' इति चिन्तयित्वा भणितास्ते 'तत्रैव बहु मन्यध्व यूय येन तिष्ठाम' तैरुक्तमतीव सम्मतमस्माक तिष्ठत यूयम् ।

**वल्लभगणिना** पादयोर्निपत्य भणितम्–' यथा श्रीपूज्यपादा आज्ञापयन्ति, तथैव निश्चित प्रवर्तिष्ये ' ।

प्रधानदिने चलितो यथाऽऽगतमार्गेण पुन**र्मरुकोट्टे** प्राप्त । आगच्छता सिद्धान्तानुसारेण देवगृहे विधिर्लिलिखे । येन विधिनाऽविधिचैत्यमपि मुक्ति साधन **विधिचैत्य** स्यात् । स चायम्—

दीक्षागुरुमीलनम्, मार्ग विधि-प्रकाश

"अत्रोत्सूत्रजनक्रमो न च न च स्नात्र रजन्या सदा
साधूना ममताऽऽश्रयो न च न च स्त्रीणां प्रवेशो निशि ।
जाति–ज्ञातिकदाग्रहो न च न च श्राद्धेषु ताम्बूलमि–
त्याज्ञाऽत्रेयमनिश्रिते **विधिकृते** श्रीजैनचैत्यालये ॥ १ ॥"

इत्यादिविधिर्विधेयो येन सर्व चैत्यवन्दनाद्यनुष्ठान मुक्तये सम्पद्यत इति । ततोऽसौ स्वगुरुसमीपे गन्तु प्रवृत्त प्राप्तो **माइयड**ग्रामे **आसिकादुर्गा**दर्वाक् क्रोशत्रये स्थित । तत्रैव गुरुमीलनाय पुरुष प्रेषितस्तस्य हस्ते लेखो दत्तो यथा-'युष्मत्प्रसादेन सुगुरुसमीपे वाचनां गृहीत्वा **माइयड**ग्रामेऽह समागतोऽस्मि । पूज्यै प्रसाद कृत्वाऽत्रैवागत्य मम मीलनीयम् ।' ततो गुरुभिरज्ञायि–'किमिति **जिनवल्लभे**नेत्थ निर्दिष्टम् ?, नात्रागतोऽभवत्' । ततो द्वितीयदिने सकललोकेन सार्ध समायात आचार्य, अभिमुख गतो **जिनवल्लभ**, प्रणतो गुरु, पृष्टा क्षेमवार्ता गुरुणा, कथिता यथोक्ता सर्वाऽपि वार्ता । तेन ब्राह्मणसमाधाननिमित्त मेघादिस्वरूपाणि तथा ज्योतिषबलेन भणितानि कानिचिद् यथा गुरोरप्याश्चर्यकारीणि जातानि । ' भूतपूर्वकस्तद्वदुपचार ' इति न्यायात् गुरोरित्युक्तम् ।

[ तत ] पृष्टो गुरुणा–'किमिति मध्ये त्व नागत ? ' । **जिनवल्लभगणिना** ऽभिहितम्–' भगवन् ! सुगुरुमुखाज्जिनवचनामृत पीत्वा कथम धुना दुर्गतिगुणात्मन समुपचितपाश चैत्यवास विषवृक्षसदृश सेवितुमिच्छामि ? ।' ततो गुरुणा भणितम्–'भो **जिनवल्लभ** ! मयेद चिंतितमासीत् यत् तुभ्यं स्वपद दत्त्वा त्वयि स्वगच्छ–देवगृह–श्रावकादिचिन्तां निवेश्य पश्चात् स्वय सद्गुरुपार्श्वे वसतिमार्गमङ्गीकरिष्ये ' । ततो **जिनवल्लभगणिना** निष्कम्पवदनारविन्देन भणितम्–'भगवन् ! अतीव शोभनमेतद्, विवेकस्य हीदमेव फलम्, यद् हेयपरित्यागेनो पादेयमुपादीयते । तर्हि मयैव सुगुरुसमीपे गम्यते । गुरुणेऽपि श्वस्य प्रत्यपादि यदुत–'वत्स ! ईदृशी नि स्पृहता नस्याऽऽत्मन्, यया चिन्तामणिसमर्थ पुरुष विना

चैत्यवासत्याग

गुर्वाज्ञाया विशेषत प्रवर्तमान **साधारणः** सकलसङ्घस्य साधारण सममवत्। सट्टकादयोऽन्येऽपि श्राद्धा **साधारण**वत् सर्वत्र **जिनवल्लभगणे**राज्ञया प्रवर्तितुमारब्धा।

तत्र कृतचातुर्मासिककल्पाना श्री**जिनवल्लभ**वाचनाचार्याणामाश्विनमासस्य कृष्णपक्षत्रयोदश्यां श्री**महावीर**देवगर्भापहारकल्याणक समागतम्। तत श्राद्धाना पुरो भणित **जिनवल्लभगणि**ना—भो श्रावका! अद्य श्री**महावीरस्य** षष्ठ गर्भापहारकल्याणक "पंच हत्थुत्तरे हुत्था साइणा परिनिव्वुडे" इति प्रकटाक्षरैरेव सिद्धान्ते प्रतिपादनात्। अन्यच्च तथाविध किमपि **विधिचैत्यं** नास्ति, ततोऽत्रैव चैत्यवासिचैत्ये गत्वा यदि देवा वन्द्यन्ते तदा शोभन भवति। गुरुमुखकमलविनिर्गतवचनाराधकैः [श्रावकै]रुक्तम्—'भगवन्! यद् युष्माक सम्मत तत् क्रियते। तत सर्वे श्रावका निर्मलशरीरा निर्मलवस्त्रा गृहीतनिर्मलपूजोपकरणा गुरुणा सह देवगृहे गन्तु प्रवृत्ता। ततो देवगृहस्थितयाऽऽर्यिकया गुरुश्राद्धसमुदायेनागच्छतो गुरून् दृष्ट्वा पृष्टम्—'को विशेषोऽद्य?'। केनापि कथितम्—'वीरगर्भापहारषष्ठकल्याणककरणार्थमेते समागच्छन्ति'। तया चिन्तितम्—'पूर्वं केनापि न कृतमेतदेतेऽधुना करिष्यन्तीति न युक्तम्'। पश्चात् सयती देवगृहद्वारे पतित्वा स्थिता। द्वारप्राप्तान् प्रभूनवलोक्योक्तमेतया दुष्टचित्तया—'मया मृतया यदि प्रविशत'। तादृगप्रातिक ज्ञात्वा निवर्त्य स्वस्थान गता पूज्या। श्राद्धैरुक्तम्—भगवन्! अस्माक बृहत्तराणि सदनानि सन्ति, तत एकस्य गृहोपरि चतुर्विंशतिपट्टक धृत्वा देववन्दनादि सर्व धर्मप्रयोजन क्रियत। षष्ठकल्याणकमाराध्यते। गुरुणा भणितम्—'तत् किमत्रायुक्तम्?' तत आराधित विस्तरेण कल्याणकम्। जात समाधानम्।

*चित्रकूटे महावीर-षष्ठ कल्याणकाराधनम्*

अन्येद्युर्गीतार्थैं श्रावकर्मन्त्रित यथा—'विपक्षेभ्योऽविधिप्रवृत्तेभ्य पार्श्वाज्जिनोक्तो विधिर्विधातु न लप्स्यते, ततो यदि गुरो सम्मत भवति, तदा तले उपरि च देवगृहद्वय कार्यते। स्वसमाधान गुरूणा निवेदितम्। गुरुभिरप्युक्त यथा—

*चित्रकूटे विधिचैत्य-द्वयप्रतिष्ठा*

"जिनमवन जिनबिम्ब जिनपूजा जिनमत च य कुर्यात्।
तस्य नरामर—शिवसुखफलानि करपल्लवस्थानि ॥ १ ॥"

इति देशनया ज्ञात श्राद्धे श्रद्धाप्रधानैर्यद् गुरूणामभिप्रेतमेतैतल्लोकमध्ये च वार्ता जाता यथैते देवगृहद्वितय कारयिष्यन्तीति वार्तामाकर्ण्य प्रह्लादनवृहत्तरेण बहुदेवश्रेष्ठिना कथितमेतेऽष्ट कापालिका देवगृहद्वय कारयिष्यन्ति राजमान्या भविष्यन्तीति एतच्च श्रुतं श्री**जिनवल्लभगणि**भि। अपरस्मिन् वासरे बहिर्गच्छता प्रभूणां

१ पच हत्थोत्तरेऽभवत्, स्वातिना परिनिवृत।

ततो देव–गुरून् सस्मृत्य देवता चानुज्ञाप्य स्थिता । तत्र देवता च तेपा ज्ञानेन [ध्यानेन] सद[नुष्ठानेन] तुष्टा सती दुष्टप्रयुक्त तान् प्रत्ययुक्त दत्तावधाना रक्षति।

ते च श्री**जिनवल्लभगणि**वाचनाचार्या समस्तविद्यानिधानभूता । कथम्?

विद्यावैशारद्यम् गुरुत्वम्

तथाहि–सर्वसिद्धान्तवेदिन सूत्रतोऽर्थतश्च कण्ठस्थ**पाणिन्या**द्यष्टव्याकरणा **मेघदूता**दिमहाकाव्यादिसर्वकाव्या **रुद्रटोद्भट–दण्डि–वामन–भामहा**द्यलङ्कार–चतुरशीतिनाटक–समग्रज्योतिषशास्त्र–**जयदेवा**दिनि शेषच्छन्दोग्र थ–**जिनेन्द्र**मतव्यवस्थापका**भयदेवानेकान्तजयपताका**दि–**तर्ककन्दली–किरणावली–न्याय–शङ्करनन्दन–कमलशीला**दिपरसमयतर्कनिष्णाता अतस्तत्सौरभेण श्री**चित्रकूटे** प्रकर्षेण विख्याता सञ्जाता । सर्वे परदर्शनिकविप्रादिलोका आगन्तु प्रवृत्ता । यस्य यस्य यद्यच्छास्त्रविषय सशय समुत्पद्यते स सर्वोऽपि जनस्त त पृच्छाति । श्री**जिनवल्लभगण**योऽपि भास्करकरा इव विसृत्वरा समस्तमपि सशयान्धकारमुच्छेदयन्ति । श्रावका अपि स्तोकस्तोकेन च समागच्छन्ति । तत सिद्धान्तवचनानि श्रुत्वा तदनुसारेण क्रियामपि दृष्ट्वा **साधारण–सढक–सुमति–पल्हक–वीरक–मानदेव–धन्धक–सोमिलक–वीरदेवा**दिभि श्रावकै समाधिना श्री**जिनवल्लभगणि**वाचनाचार्या गुरुत्वेन प्रतिपेदिरे।

श्री**जिनवल्लभगणी**शाना गुरूपदेशेनातातानागतादिज्ञान ज्योतिषपरिज्ञान चातिशयितमासीत् । भगवदन्तिके **साधारण**श्राद्ध परिग्रहप्रमाण ग्रहीतु प्रवृत्त, गणिभिश्चैरक्त –' कियन्मात्र सर्वसग्रहे करिष्यासि ?' **साधारण** –'भगवन् ! सत विंशत्या सहस्रैर्मे' । विमलज्ञानदृष्टय

अनागतज्ञानम्

श्री**जिनवल्लभ**गुरव –'श्रावक ! बहुतर कुरु' । तत कृतानि त्रिंशत सहस्राणि । पुन [पूज्या] ज्ञानेन 'महानुभाव ! इतोऽपि प्रभूततर परिभावय'। **साधारणः**– प्रभो ! मदीयसमस्तगृहसारमूल्यगणनेऽपि पञ्च शतानि न पूर्यन्ते, कीतस्तुती ममाम्यधिकतरद्रव्यसम्प्राप्ति ?। पुनर्गुरव प्रभव —सर्वसाधारण **साधारण** ! धार्मिकश्रावक ! किमवाप्य पुण्यसम्भारस्य ? मा कुरु गणनातुच्छाम्, चणकमात्रविक्रयिणोऽपि पुण्या सद्धान्यनिष्कलक्षपतयो भवन्ति' इति साभिप्राय गुरुवचनमाकर्ण्य ' निश्चित किञ्चित् कायनमन्त्राम्नायादिक मन्त्र मम भविष्यतीति विचिन्त्यैतद् विहस्य च **साधारणे**नोक्तम्– 'यद्येव तर्हि भगवन् ! भवतु सर्वपरिग्रहे ममैक लक्षमिति' । तथाविधार्गगृहीतपरिग्रहप्रमाण सन् सद्गुरुदोषाम्पराभिमितावग्रहगन्तरयपरमा दिने दिने प्रवर्धमान सम्पदा

पपात, भणितुं च लग्नो यावदत्र तिष्ठामि, निश्चितं तावद् भगवता पादान् वन्दित्वा भोजनं विधास्यामि। न मानविडम्बितेन मया ज्ञाता एवंविधा भवन्त। जाता सार्वत्रिकी प्रसिद्धिर्यदहो! ज्ञानिनः श्वेतपटा एव भवन्ति।

अन्यदा कदाचिन्मुनिचन्द्राचार्येण शिष्यद्वयं सिद्धान्तवाचनानिमित्तं श्री**जिनवल्लभगणि**पार्श्वे प्रेषितम्। **जिनवल्लभगणि**रपि तयोर्वाचनां दातुं प्रवृत्तस्तावन्यस्थगुरौ(भ) चिन्तयतः—'यदि **जिनवल्लभगणेः** श्राद्धान् कथञ्चिद् विप्रतारयाव' इति बुद्धया रञ्जयतः श्रावकान्। कदाचित् स्वगुरुपार्श्वे प्रेषितुं प्रच्छन्नवृत्त्या लेखोऽलेखि। तं च वाचनाकपलिकायां प्रक्षिप्य वाचनां ग्रहीतुं गतौ तौ वसतौ गणिसमीपे वन्दनं दत्त्वोपविष्टौ। यावदुच्छोटिता कपलिका ततो नूतनो लेखो दृष्ट्वा गृहीतो **जिनवल्लभगणि**मिश्रैरुच्छोटितश्च। तावपि हस्ताद् ग्रहीतुं न शक्नुतः। ततोऽवधारितो लेखः। लिखितं च तत्र—"**जिनवल्लभगणेः** केचित् श्राद्धा स्ववशं नीताः सन्ति, क्रमेण सर्वानपि वशीकरिष्याव इति मनोवृत्तिरस्ति।" 'अयं चार्थो निरुद्धत्वा[द् य]द्यपि शास्त्रोपनिबन्धयोग्यो न भवति, तथापि चरितोपरोधादुक्त इति'। ततः श्री**जिनवल्लभगणि**ना द्विधा विधायाभाणि यथा—

क्रियमाणव्रकुशिष्य त्याग

"आसीज्जन कृतघ्नः क्रियमाणघ्नस्तु साम्प्रतं जातः।
इति मे मनसि वितर्को भवितालोकः कथं भविता? ॥ १ ॥"

इति पठित्वोक्तम्—अहो! एवंविधाशुभमावयोः सृतं भवतोर्वाचनया। पश्चाद् विमुखौ गतौ स्वस्थानम्, पुनर्न दृष्टाविति।

कदाचिज्जिनवल्लभगणेर्बहिर्भूमौ गच्छतः कश्चिद् विचक्षणः प्रसिद्धिं पाण्डित्यस्य श्रुत्वा मिलितः, समस्यापदं च प्रक्षिप्तं कस्यापि राज्ञो वर्णनमाश्रित्य यथा—

समस्यापूर्ति

'कुरङ्गः किं भृङ्गो मरकतमणिः किं किमशनिः'[१]।'

१ वि. सं. १३३४ वर्षे प्रभाचन्द्रसूरिणा विरचिते प्रभावकचरिते कविराजश्रीपाल-देवबोधयोः संवादेऽपीयं समस्यापूर्तिः प्रादर्शि—

समस्यां दुर्गमां काञ्चित् पृच्छनेति नृपादिते।
*श्रीपालः कविरानेकः स्फुटं शिखरिणीपदम्* ॥
तद्य—'कुरङ्गः किं मृगो मरकतमणिः किं किमशनिः?'
तत्पार्श्वस्थ एवामावदत् कविनायकः।
चरणत्रितयवृत्ते को विलम्बोऽत्रामूदृशि? ॥
तद् यथा-चिरं चित्तोद्यानं चरसि च मुखाब्जं पिबसि च
क्षणादेणाक्षीणां विषयविषमुद्रां हरसि च।
नृप! त्वं मानाद्रिं दलयसि च किं कौतुककरः
कुरङ्गः किं भृङ्गो मरकतमणिः किं किमशनिः? ॥
—प्रभावकचरिते (नि. सा. प्रकाशिते पृ. २०९)

सोऽपि मिलित । साक्षेप भणित ज्ञानदिवाकरै श्री**जिनवल्लभगणि**मिश्रै –'भद्र ! **वहुदेव** ! गर्वो न निधेय । कश्चिदेतन्मध्यात् सोऽपि भविष्यति, यस्त्वा बद्धमुच्छोटयिष्यति' । तच्च तथैव सञ्जातम् । प्रभुप्रसादात् **साधारण**साधुर[प्य]तिक राजमान्यो बभूव । **नरवर्म**नृप क्वाप्यपराधे तस्मै दुष्टमुखाय रुष्टस्तमुष्ट्रेण सह बद्धोष्ट्रमित्रारटन्तू **धारा**यामानाययति । तत्र च केनापि प्रयोजनेन **साधारण**साधुर्गतोऽभूत् ततस्तेन सकलजगत्साधारणेन साधु**साधारणेन** निहित सेधनादिनिवारणेन निष्कारणेन राजान विज्ञप्याङ्गीकृतसाधुचेष्टितेन बन्धनामोचितोऽसौ वराक । देवगृहयुग्ममपि सोत्साहै श्रावकै कारयितुमारब्धम्, देव–गुरुप्रसादात् परिपूर्ण निष्पन्नम् । तत्र चोपरिष्टात् श्री**पार्श्व**जिनभवनमधस्ताच्च श्रीभव्याना लोचनमनोहारि समुत्तुङ्गशिखरतोरण स्वर्णमयदण्डकलशपरम्पराप्रभामण्डलखण्डितचण्डान्धकार श्री**महावीर**जिनभवन निर्मापितम् । श्री**जिनवल्लभगणि**वाचनाचार्यैर्विस्तरेण समस्तविधिपूर्वक चक्रे गरिष्ठा प्रतिष्ठा । सर्वत्र प्रसिद्धिर्जाता अहो ! एत एव [गुरवो] गुरव इति ।

ज्योति परिज्ञानम्

अथ यदा लोकमध्य एवविधा सर्वशास्त्रविद श्वेतपटा समाजग्मुरिति श्लाघां महतीं श्रुत्वा विप्र एको ज्योतिषिक पण्डितमानी श्री**जिनवल्लभगणि**समीपे समागत । श्रावकै पट्टासन दत्तम् । पृष्टोऽसौ गुरुभिर्भद्र ! भवतां कुत्र स्थाने वास ?, कस्मिंश्च शास्त्रेऽभ्यास ? । विप्र – निवासस्तावदत्रैवाभ्यासस्तु सर्वेष्वपि व्याकरण–काव्य–नाटकालङ्कारादिषु । वाचनाचार्या – भवतु, विशेषेण कुत्र ? । विप्र – ज्योतिषे । वाचनाचार्या –चन्द्रादित्यलग्ने सम्यग् वेत्सि ? । विप्र सगर्वम्–किमत्रैवागणिते एक द्वौ त्रीन् वा लग्नान् प्रतिपादयामि ? । तत सगर्व तद्वचनमुपश्रुत्य वाचनाचार्या –शोभन परिज्ञानम् ? । पुनर्विप्र – युष्माकमपि किमप्यस्ति लग्नविषये परिज्ञानम् ? । वाचनाचार्या – भविष्यति किञ्चित् । विप्र साक्षेपम्–तर्हि कथयन्तु भवन्त । वाचनाचार्या अनुसिक्ता अपि सोत्प्रेकमिव भो भो विप्र ! कथय कति कथयामि दश विंशतिं वा लग्नान् ? । तच्छ्रुत्वा तस्याश्चर्यमभूत् तावत्सङ्ख्यांल्लग्नान् झटिति प्रतिपाद्य पुनर्भणित भगवद्भि –भो विप्र ! गगनमण्डले हस्तद्वयद्वयस मेघखण्ड पश्यसि ? । वभाण ब्राह्मण –पश्यामि । वाचनाचार्यरुक्तम्–कथय [किय]–मात्र जल मोक्ष्यति ? । विप्रोऽजानान शून्यदृष्टिर्दिशोऽवलोकयति । ततो भणित भगवद्भि –शृणु भो विप्र ! घटिकाद्वयान्तरे एतमेघखण्ड हस्तद्वयमात्रमप्यधुना सकलगगनमण्डल व्याप्य तावद् वृष्टिं करिष्यति [यावता ततो वपर(?) मेव भाजनादय परिपूर्णं भविष्यति । ततश्च] तत्रैवोपविष्टस्य विप्रस्योर्ध्वमुखस्य सर्व तथैव सञ्जातम् । विप्रो मस्तके हस्तौ योजयित्वाऽहो ! ज्ञानमहो ! ज्ञानमिति शिरो धुन्वन् प्रभूणां पादयोर्

पपात, भणितु च लग्नो यावदत्र तिष्ठामि, निश्चित तावद् भगवता पादान् वदित्वा भोजन विधास्यामि। न मानविडम्बितेन मया ज्ञाता एवविधा भवन्त। जाता सार्वत्रिकी प्रसिद्धिर्यदहो! ज्ञानिन श्वेतपटा एव भवन्ति।

क्रियमाणघ्नकुशिष्य त्याग

अथदा कदाचिन्**मुनिचन्द्राचार्येण** शिष्यद्वय सिद्धान्तवाचनानिमित्त श्री**जिनवल्लभगणि**पार्श्वे प्रेषितम्। **जिनवल्लभगणि**रपि तयोर्वाचना दातु प्रवृत्तस्तावप्यशुभौ(भ) चिन्तयत –'यदि **जिनवल्लभगणेः** श्राद्धान् कथञ्चिद् विप्रतारयाव' इति बुद्धया रञ्जयत श्रावकान्। कदाचित् स्वगुरु-पार्श्वे प्रेषितु प्रच्छन्नवृत्त्या लेखोऽलेखि। त च वाचनाकपलिकाया प्रक्षिप्य वाचना ग्रहीतु गतौ तौ वसतौ गणिसमीपे वन्दन दत्त्वोपाविष्टौ। यावदुच्छोटिता कपलिका ततो नूतनो लेखो दृष्ट्वा गृहीतो **जिनवल्लभगणि**मिश्रैरुच्छोटितश्च। तावपि हस्ताद् ग्रहीतु न शक्नुत। ततोऽवधारितो लेख। लिखित च तत्र–"**जिनवल्लभगणे** केचित् श्राद्धा स्ववश नीता सन्ति, क्रमेण सर्वानपि वशीकरिष्याव इति मनोवृत्ति-रस्ति।" 'अय चार्थो विरुद्धत्वा[द् य]द्यपि शास्त्रोपनिबन्धयोग्यो न भवति, तथापि चरितोपरोधादुक्त इति'। तत श्री**जिनवल्लभगणि**ना द्विधा विधायाभाणि यथा–

"आसीज्जन कृतघ्न क्रियमाणघ्नस्तु साम्प्रत जात।
इति मे मनसि वितर्को भविताऽलोक कथ भविता? ॥ १ ॥"

इति पठित्वोक्तम्–अहो! एवविधाशुभभावयो सृत भवतोर्वाचनया। पश्चाद् विमुखौ गतौ स्वस्थानम्, पुनर्न दृष्टाविति।

समस्यापूर्ति

कदाचिज्**जिनवल्लभगणे**र्बहिर्भूमौ गच्छत कश्चिद् विचक्षण प्रसिद्धि पाण्डि-त्यस्य श्रुत्वा मिलित, समस्यापद च प्रक्षिप्त कस्यापि राज्ञो वर्णनमाश्रित्य यथा–

'कुरङ्ग किं भृङ्गो मरकतमणि किं किमशनि'[१]।'

---

१ वि स १३३४ वर्षे प्रभाचन्द्रसूरिणा विरचित प्रभावकचरिते कविराजश्रीपाल–देवबोधयो सवादेऽपीय समस्यापूर्ति प्रादर्शि–

समस्या दुर्गमा काञ्चित् पृच्छनेति नृपादिते।
**श्रीपाल** कविवानेक स्फुट शिखरिणीपदम्॥
तच–'कुरङ्ग कि भृगो मरकतमणि कि किमशनि?'
तत्पाठश्रुत्य एवामावदत् कविनायक।
चरणत्रितयवृत्ते को विलम्बोऽत्रामू"शि?॥

तद् यथा–चिर चित्तोद्याने चरसि च मुखाब्ज पिबसि च
क्षणादणाक्षीणा विषयविषमुद्रा हरसि च।
नृप! त्व मानाद्रि दलयसि च किं कौतुककर
कुरङ्ग किं भृङ्गो मरकतमणि कि किमशनि?॥

—प्रभावकचरिते (नि सा प्रकाशिते पृ ३०९)

तत श्रीजिनवल्लभगणिना मनाक् परिभाव्य तदैव पूरिता समस्या, कथिता च तदग्रत । यथा—

" चिर चित्तो(त्रो)द्याने चरसि च मुखाब्ज पिवसि च
क्षणादेणाक्षीणा विरहविषमोह हरसि च ।
नृप ! त्व मानाद्रिं दलयसि च किं कौतुककर
कुरङ्ग किं भृङ्गो मरकतमणि किं किमशनि ? ॥ १ ॥"

इति श्रुत्वाऽस्य त प्रमुदितो गदितु प्रवृत्तोऽहो ! निश्चित न निर्मूला जनप्रसिद्धि 'यादृशा श्रुता[स्ता]दृशा एव यूयम्' इति गुणस्तुतिं कृत्वा पादयो पतित्वा गत । तत सुगुरुर्वसतौ समागत श्रावकै पृष्टो यत् सुगुरो ! किमि[ति] वह्वी वेला लग्ना ? । सहगतेन शिष्येण सर्वोऽपि कथिता वार्ता । जात प्रमोदोत्फुल्ललोचन समस्तोऽपि श्रावकलोक ।

वाग्जडीयलोक प्रतिबोध

गणदेवनामा श्रावक स्वर्णार्थी जिनवल्लभगणिपार्श्वे सुवर्णसिद्धिरस्तीति केनाप्युक्ते चित्रकूटस्थस्य भगवत [समीपे] समागत्य पर्युपासनां कर्तुमारब्ध । लक्षितस्तद्भावो गणिना । तथापि योग्य त ज्ञात्वा तथा कृता ससारवैराग्यजननी देशना यथाऽसावस्य त सविग्नो नि स्पृहो जात । ततो भणित गणिना—भद्र ! किं सुवर्णसिद्धि कथयामि ? । तेनोक्तम्—भगवन् ! युष्मत्पादशुश्रूषां कुर्वाणो विंशतिद्रम्मनीव्या व्यवहार कुर्वन् श्राद्धधर्मं करिष्यामि । तस्य च धर्मकथने लब्धिरस्ति । ततो लिखितकुलकान् लेखान् दत्त्वा शिक्षयित्वा प्रेषितो वाग्ज(ग्ग)डदेशे । कृत सर्वोऽपि वाग्ज(ग्ग)डीयलोक श्रीजिनवल्लभगणिं प्रति जातप्रतिबन्धस्तेन ।

दृष्टमाक्षणस्य दोषनमनम्

श्रीजिनवल्लभगणिव्याख्याने सर्वे विचक्षणा जना उपविशन्ति, विशेषतो ब्राह्मणा स्वस्वविद्यासन्देहापोहार्थम् । अन्न कदाचिदिय गाथा व्याख्याने समागता य[था]—

" धिज्जाईण गिहीण पासत्थाईण या वि दट्ठूण ।
जस्स न मुज्झइ दिट्ठी अमूढदिट्ठि तय विंति ॥ १ ॥ "

---

१ वि स १२९१ वर्ष जिनपालगणिना युगप्रधानाचार्यगुर्वावलि, तत्प्रशस्तिगाथा उपरि द्रष्टव्या ।

२ धिज्(ज्जि)जातीन् गृहिणश्च पार्श्वस्थादीन् वाऽपि दृष्ट्वा । यस्य न मुह्यति दृष्टिरमूढदृष्टि तं ब्रुवन्ति ॥

ततो नि.शङ्केन व्याख्या[ता] यथावस्थित श्रीजिनवल्लभगणिना धिग्जातीया ब्राह्मणा इति व्याख्यान श्रुत्वा कुपिता विप्रा बहिर्निर्गता एकत्र मिलिता विपक्षाश्च निकटीभूता । आलोचित विप्रैरेतै सह विवाद विधायैतान् निष्प्रभान् करिष्याम । अथ तेषा स्वरूप तादृश विज्ञाय श्रीजिनवल्लभगणेर्मनसि तेभ्यो भय समजनि ? उच्यते, न मनागपि । किमुत्कटकरटिकरटतटपाटनपटिष्ठनिष्ठुरप्रकोष्ठपञ्चाननस्य निज सिंहनादप्रतिशब्दबधिरीकृतकाननस्य कदाचित् पवनप्रेङ्खोलिततरुवरशिखरनिपतितपर्णमात्रोत्त्रसपलायनसञ्जाताङ्गभङ्गेभ्य कुरङ्गेभ्य स्याद् रोमोद्धर्षमात्रमपि ? । तथा चास्मद्गुरूणा श्रीजिनपतिसूरीणामत्रैवार्थेऽन्योक्तिर्यथा–

" खरनखरशरकोटिस्फोटिताग्रेभकुम्भ–
स्थलविगलितमुक्ताराजिविभ्राजिताजि ।
हरिरविगिरि[मा] किं तर्जितो निर्जितो वा–
ऽनिलचलदलपातत्रस्नदङ्गे कुरङ्गे ? ॥ १ ॥"

ततो भगवता श्रीजिनवल्लभगणिना—

"मर्यादामङ्गभीतेरमृतमयतया धैर्य–गाम्भीर्ययोगाद्
न क्षुभ्यन्ते च तावन्नियमितसलिला सर्वदैते समुद्रा ।
आहो ! क्षोभ व्रजेयु क्वचिदपि समये दैवयोगात् तदानीं
न क्षोणी नाद्रिचक्र न च रवि-शशिनौ सर्वमेकार्णव स्यात् ॥ १ ॥"

इति वृत्त भूर्जखण्डे लिखित्वा विवेकिजनहस्ते दत्त्वा प्रेषित भणितश्चासौ मिलिताना मध्ये वृहद्ब्राह्मणस्य हस्ते दातव्यम्, तथैव च कृत तेन । ततो विविक्तबुद्धिना वृत्तार्थ परिभाव्य चिन्तित तेनाहो ! वयमेकैकविद्याधारिण एते च सर्वविद्यानिधान कथ तै सह विवाद कर्तुं शक्यते ? इति विचिन्त्य तेन सर्वेऽपि विप्रा 'अहो ! हृदयचक्षुषा न प्रेक्षध्वे यूयम्, एकैकमलिनविद्याधारिणो यूय सर्वेऽपि । स च निखिलनिस्तुषविद्यानिधानमतस्तेन सह कादृशो युष्माक विवाद ?' इत्यादिवचनसन्दर्भेण प्रतिबोध्योपशम नीता, श्रीजिनवल्लभगणे. पादयोश्च पातिता इति ।

अ[न्य]दा धारानगर्यां श्रीनरवर्मराजसभायां देशान्तरात् पण्डितद्वय समागतम् । तेन च राज्ञ पण्डितानां पुरत पूरणार्थं प्रक्षिप्तमिद समस्यापद यथा–'कण्ठे कुठार कमठे ठकार ' इति । तत पण्डितै प्रत्येक स्वकीयस्वकीयप्रज्ञानुसारेण पूरिता, पर न तयोर्मनो मुमुदे । केनापि राज्ञ पुरोऽभिहि-

समस्यापूर्तिवृत्त

तत श्रीजिनवल्लभगणिना मनाक् परिभाव्य तदैव पूरिता समस्या, कथिता च तदग्रत । यथा—

" चिरं चित्तो(त्रो)याने चरसि च मुखाब्ज पिबसि च
क्षणादेणाक्षीणां विरहविषमोह हरसि च ।
नृप ! त्व मानाद्रिं दलयसि च किं कौतुककर
कुरङ्ग किं भृङ्गो मरकतमणि किं किमशनि [१] ॥ १ ॥"

इति श्रुत्वाऽत्यन्त प्रमुदितो गदितु प्रवृत्तोऽहो ! निश्चित न निर्मूला जनप्रसिद्धि 'यादृशा श्रुता[स्ता]दृशा एव यूयम्' इति गुणस्तुतिं कृत्वा पादयो पतित्वा गत । तत सुगुरुर्नसतौ समागत श्रावकै पृष्टो यत् सुगुरो ! किमि[ति] बह्वी वेला लग्ना ? । सहगतेन शिष्येण सर्वोऽपि कथिता वार्ता । जात प्रमोदोत्फुल्ललोचन समस्तोऽपि श्रावकलोक ।

वाग्जडीयलोक प्रतिबोध

गणदेवनामा श्रावक स्वर्णार्थी जिनवल्लभगणिपार्श्वे सुवर्णसिद्धिरस्तीति केनाप्युक्ते चित्रकूटस्थस्य भगवत [समीपे] समागत्य पर्युपासनां कर्तुमारब्ध । लक्षितस्तद्भावो गणिना । तथापि योग्य त ज्ञात्वा तथा कृता ससारवैराग्यजननी देशना यथाऽसावत्यन्त सविग्नो नि स्पृहो जात । ततो भणित गणिना—भद्र ! किं सुवर्णसिद्धिं कथयामि ? । तेनोक्तम्—भगवन् ! युष्मत्पादशुश्रूषां कुर्वाणो विंशतिद्रम्मनाव्या व्यवहार कुर्वन् श्राद्धधर्म करिष्यामि । तस्य च धर्मकथने लब्धिरस्ति । ततो लिखितगुरुकान् लेखान् दत्त्वा शिक्षयित्वा प्रेषितो वाग्ज(ग्ग)डदेशे । कृत सर्वोऽपि वाग्ज(ग्ग)डीयलोक श्रीजिनवल्लभगणिं प्रति जातप्रतिबन्धस्तेन ।

दुष्टब्राह्मणदुर्दोपशमनम्

श्रीजिनवल्लभगणिव्याख्याने सर्वे विचक्षणा जना उपविशन्ति, विशेषतो ब्राह्मणा स्वस्वनियामदेहापोहार्थम् । अथ कदाचिदिय गाथा व्याख्याने समागता य[था]—

" धिज्जाईण गिहीण पासत्थाईण वा वि दट्ठूण ।
जस्स न मुज्झइ दिट्ठी अमूढदिट्ठिं तय बिंति ॥ १ ॥ "

---

१ वि स १२६१ वर्षे लिखितजिनपतिसूरिकृतपञ्चलिङ्गीविवरणप्रशस्तौ तत्प्रशस्तिपाठ अत्र द्रष्टव्य ।

२ धिग्(द्वि)जातीन् गृहिणश्च पार्श्वस्थादीन् वाऽपि दृष्ट्वा । यस्य न मुह्यति दृष्टिरमूढदृष्टिं तं ब्रुवन्ति ॥

जस्य महानाग्रहस्तर्हि **चित्रकूटे** श्रावकैर्देवगृहद्वय कारितमस्ति, तत्र पूजार्थं स्वमण्डपिकादानात् पारुत्थ[लक्ष]द्वय दापयत।" ततो राजा तुष्ट शाश्वत मा(मे) दान भनिष्यतीति तथैव चकार। तथा श्रीजिनवल्लभगणेर्धार्मिकत्वेन सर्वत्र प्रसिद्धिर्जज्ञे।

ततश्च श्री**नागपुरे** श्रावकैर्देवगृह **नेमिनाथविम्बं** च नूतन कारितमस्ति। तेषामेव बभूवाभिप्रायो [य]दुत वय महाचारित्रिण श्री**जिनवल्लभगणिं** गुरुत्वेनाभ्युपेत्य तस्य हस्तेनोभयो प्रतिष्ठा कारयिष्याम इति चिन्तयि[त्वा] सर्वसम्मतेन महताऽऽदरेण महता बहुमानेनाकारितो भगवान् श्री**जिनवल्लभगणि**। तत पूज्ये शुभलग्ने देवगृह **नेमिनाथ विम्बं** च प्रतिष्ठितम्। तत्पग्रहस्तप्रभावाल्लक्षपतयस्ते श्रावका जज्ञिरे। **नेमिनाथ**बिम्बे रत्नमयानि मुकुट–तिलक–कुण्डलाङ्गद–श्रीवत्स–कण्ठमणिमालिकाद्याभरणानि कारयाञ्चक्रिरे।

**नागपुरे नेमिजिनालयप्रतिष्ठा**

तथा नरवरपुरीयश्रावकाणा तथाऽभिप्रायो [जा]तो वयमपि श्री**जिनवल्लभगणिं** गुरुत्वेनाङ्गीकृत्य देवगृह–विम्बयो प्रतिष्ठा विधापयाम इति पर्यालोच्य तथैव कारयामासु। उभयोरपि जिनगृहयो रात्रिबलिधारण– रात्रिस्त्रीप्रवेशन—रात्रिप्रतिष्ठाकारणवारणादिको मुक्तिसाधको विधिर्लिखित।

**नरवरपुरे विधि–चैत्यप्रतिष्ठा**

ततो **मरुकोट्टी**यश्रावकै श्री**जिनवल्लभगणि**वाचनाचार्या विहारक्रमाय समाहूता **विक्रमपुर**मार्गेण **मरुकोट्टे** विहृता। तत्र श्राद्धे श्रद्धावद्भिर्गुर्विस्थानादियुक्ता दत्ता वसति, स्थितास्तस्याम्। श्रावकैरुक्तम्—भगवन्! युष्मद्वदनारविन्दाज्जिनवचनरसमास्वादयितुमिच्छाम। प्रभुभिरभाणि–'युक्तमेतच्छ्रावकाणाम्, तर्हुपदेशमाला कथयितुमारभ्य[ते]'। तैरुक्तम्–पूर्वमेव श्रुता। पूज्यैर्भणितम्–भूयोऽपि श्रूयताम्। भव्यदिने व्याख्यातुमारब्धोपदेशमाला।

**मरुकोट्टे विहार, व्याख्यानशक्ति**

"सवच्छरमुसभजिणो छमासा वद्धमाणजिणचदो।
इय विहरिया निरसणा जएज्ज एउवमाणेण॥ १॥"

इत्येकस्या अपि गाथाया व्याख्याने षण्मासावधि कालो व्यतीतस्तथापि श्रावकाणां नानासिद्धान्तोदाहरणामृतेन तृप्तिर्न जाता। भणितुमारब्धा —श्रीभगवन्तस्तीर्थङ्करा एवैव वचनामृतेन श्रोत्रसुखमुत्पादयितु समर्था। सत्य तीर्थकरप्रतिरूपा यूय कथमन्यथेदृशी अमृतस्राविणी वाणी ईदृशी च व्याख्यानलब्धिरिति भृश सन्तुष्टा देशनया श्रावका।

तम्—' देव ! न पण्डितपूरिता समस्या प्रतिभात्यनयो । राज्ञोक्तम्—अहो ! अस्ति कश्चिदुपायो येनानयोर्मनो रज्यते ? । केनापि विवेकिना पुरुषेणोक्तम्—देव ! **चित्रकूटे** श्वेतपटो **जिनवल्लभगणि** सर्वविद्यानिधानमाकर्ण्यते । राज्ञा तदैवोष्ट्रद्वय शीघ्रगति [स]पुरुष सलेख प्रेषितम् । लेखश्च साधु**साधारण**निमित्तम् । लिखित च [त]त्र—'भो **साधारण**साधो ! यथा त्वदीयगुरुभिर्मनोहरा पूरितेय समस्या शीघ्र समागच्छति तथा कार्यम्, नान्यथेति । एव स राजलेखस्तैरौष्ट्रिकै सन्ध्यासमये साधु**साधारण**हस्ते प्रदत्त प्रतिक्रमणवेलायाम् । साधु**साधारणेन** स नृपलेखो गुरो पुरो वाचित , अवगतस्तदर्थो गणिमिश्रै । तत प्रतिक्रमणानन्तर झटिति पूरिता [सा] समस्या यथा—

" रे रे नृपा ! श्री**नरवर्म**भूप——प्रसादनाय क्रियता नताङ्गै ।
कण्ठे कुठार कमठे ठकारश्चक्रे यदश्वोग्रखुराग्रघातै ॥ १ ॥ "

लेखयित्वा तदैव दत्ता साधु**साधारण**हस्ते । तेनाप्यौष्ट्रिकपुरुषाणा हस्ते स्वकीयविज्ञप्तिकालेखसहिता सा समस्या प्रहिता । तेऽपि लेख गृहीत्वा रात्रावेव शीघ्र **धारा**पुर्या सम्प्राप्ता । पठिता तयोर्विदुषो पुरत समस्या । रञ्जितमतीव [तया] तयोर्मन , भणित च ताभ्याम्——' अस्या सभाया नास्तीदृशो विद्वान् येनेय पूरिता, किं तर्ह्यन्य कश्चित्' इत्येव प्रशसन्तौ वस्त्रादिप्रदानेन सत्कृत्य तौ प्रेषया[ञ्चक्राते नरेश्वरेण]

[श्री**जिनवल्लभगणि**रपि भगवानुद्यतविहारकारी परमब्रह्मचारी कतिपयदिनैश्चित्रकूटाचलदुर्गाद् विहार **धारायाम्**।] केनाप्युक्त राज्ञोऽग्रे देव ! समस्यापूरक श्वेतपटोऽत्रागतोऽस्ति । ततोऽतिशयितविद्वत्तागुणाकृष्टहृदयेनोक्त नृपेण—' भो शीघ्रमाकारयत तमत्र' ।

धाराया नरवर्मनृपात् सन्मानम्

आकारितो विनयपूर्वक राजपुरुषै , समागतो भगवान् प्रणत सादर क्षिताश्वरेण । ततो लब्धाशीर्वादेन योजितहस्तमुकुलेनाभिदधे धराधवेन—' भो विद्वज्जनचूडामणे ! मम-नस्तुष्टये पारुत्थलक्षत्रय ग्रामत्रय वा गृहाण ।' ततो भणित श्री**जिनवल्लभगणि**-वाचनाचार्यै —महाराज ! व्रतिना निषिद्धोऽर्थसङ्ग्रहोऽस्मदागमे विशेषत । तथा चागम-

" दोमनसमूरजाउ पुव्वरिसिनिसेविज्जिय जई यत ।
अथ यदि अगत्य धाम निरथ तत्र चरसि ' ॥१॥" [उपदेशमाला गा०] इत्यादि ।

अतो यद्य गार्थं स्तोनापि स्पृहाम । राजा पदयोर्निपत्य प्राह—भो महात्मन् ! निस्पृहशिरोमणे ! तथापि लभ्यप्रदस्य मत्प्रयस्य वा प्रार्थनान्तरेण मम मानसमाभिनीस्यतो यथा तथा गमन मनसिज्यदीय । वाचनाचार्यैरुक्तम्—" यदत्रार्थे मया-

जस्य महानाग्रहस्तर्हि **चित्रकूटे** श्रावकैर्देवगृहद्वय कारितमस्ति, तत्र पूजार्थ स्वमण्डपिकादानात् पारुत्थ[लक्ष]द्वय दापयत । " ततो राजा तुष्ट शाश्वत मा(मे) दान भविष्यतीति तथैव चकार । तथा श्री**जिनवल्लभगणे**र्धार्मिकत्वेन सर्वत्र प्रसिद्धिर्जज्ञे ।

**नागपुरे नेमिजिनालयप्रतिष्ठा**

ततश्च श्री**नागपुरे** श्रावकैर्देवगृह **नेमिनाथबिम्बं** च नूतन कारितमस्ति । तेषामेप बभूवाभिप्रायो [य]दुत वय महाचारित्रिण श्री**जिनवल्लभगणिं** गुरुत्वेनाभ्युपेत्य तस्य हस्तेनोभयो प्रतिष्ठा कारयिष्याम इति चिन्तयि[त्वा] सर्वसम्मतेन महताऽऽदरेण महता बहुमानेनाकारितो भगवान् श्री**जिनवल्लभगणि** । तत पूज्यै शुभलग्ने देवगृह **नेमिनाथ बिम्ब** च प्रतिष्ठितम् । तत्पञ्चहस्तप्रमाणाल्लक्षपतयस्ते श्रावका जज्ञिरे । **नेमिनाथ**बिम्बे रत्नमयानि मुकुट–तिलक–कुण्डलाङ्गद–श्रीवत्स–कण्ठमणिमालिकायाभरणानि कारयाञ्चक्रिरे ।

**नरवरपुरे विधिचैत्यप्रतिष्ठा**

तथा नरवरपुरीयश्रावकाणा तथाऽभिप्रायो [जा]तो वयमपि श्री**जिनवल्लभगणिं** गुरुत्वेनाङ्गीकृत्य देवगृह–बिम्बयो प्रतिष्ठा विधापयाम इति पर्यालोच्य तथैव कारयामासु । उभयोरपि जिनगृहयो रात्रिबलिधारण– रात्रिस्त्रीप्रवेशन—रात्रिप्रतिष्ठाकारणवारणादिको मुक्तिसाधको विधिर्लिखित ।

**मरुकोट्ट विहार, व्याख्यानशक्ति**

ततो **मरुकोट्टी**यश्रावके श्री**जिनवल्लभगणि**वाचनाचार्या विहारक्रमाय समाहूता **विक्रमपुर**मध्येन **मरुकोट्टे** विहृता । तत्र श्राद्धै श्रद्धावद्भिर्गुसिस्थानादियुक्ता दत्ता वसति, स्थितास्तस्याम् । श्रावकैरुक्तम्–भगवन् ! युष्मद्वदनारविन्दाज्जिनवचनरसमास्वादयितुमिच्छाम । प्रभुभिरभाणि–'युक्तमेतच्छ्रावकाणाम्, तर्ह्युप**देशमाला** कथयितुमारभ्य[त]' । तैरुक्तम्–पूर्वमेव श्रुता । पूज्यैर्भणितम्–भूयोऽपि श्रूयताम् । भव्यदिने व्याख्यातुमारब्धोप**देशमाला** ।

" सवच्छरमुसभजिणो छमासा **वद्धमाण**जिणचदो ।
इय विहरिया निरसणा जएज्ज एउवमाणेण ॥ १ ॥ "

*इत्येकस्या अपि गाथाया व्याख्याने षण्मासानपि कालो व्यतस्तथापि श्रावकाणां* नानासिद्धान्तोदाहरणामृतेन तृप्तिर्न जाता । भणितुमारब्धा —श्रीभगवन्तस्तीर्थङ्करा एवैव वचनामृतेन श्रोत्रसुखमुत्पादयितु समर्था । सत्य तीर्थङ्करप्रतिरूपा यूय कथमन्यथेदृशा अमृतस्राविणी वाणी ईदृशी च व्याख्यानलब्धिरिति भृश सन्तुष्टा देशनया श्रावका ।

अ यदा कदाचिच्चैत्यगृहे व्याख्यान विधाय श्राद्धै सह वसतौ समागच्छन्त सति । एतस्मिन् प्रस्तावे पुरुष एकोऽश्वारूढ स्त्रीभिर्गीयमानो वहुपरिवार परिणयनाय गच्छन्नवलोकित' । तत सविषाद श्री **जिनवल्लभगणिना** सविग्नशिरोमणिना ज्ञानदिवाकरेणोक्तम्—अहो ! पश्यत कीदृशा क्षणदृष्टनष्टता ससारस्य येनैता या स्त्रियो विकसितवदनकमला गायन्त्यो गच्छन्ति, ता एव वक्ष स्थल ताडयन्त्यो महाऽऽक्रन्द कुर्वन्त्योऽनेनैव पथा व्याघुटिष्यन्ते । गता वसतौ प्रभव, स च परिणेता तत्र प्राप्त सन् नि श्रेण्या चटितुमारब्ध, आरोहतश्च स्खलित पाद पतितश्चासौ घरट्टोपरि । घरट्टकीलकेन च तस्योदर द्विधा जातम्, मृतश्च । ततस्ता स्त्रियस्तथाभूता आगच्छन्त्यस्तेनैव मार्गेण दृष्टा श्राद्धसमुदायेन समस्तेनाहो ! परिज्ञान सुगुरूणामिति गदितु प्रवृत्तश्च सर्व श्रावकलोक । एव श्रावकाणां धर्मपरिणाममुत्पाद्य पुनर्**नागपुरे** विहार चक्रु श्री**जिनवल्लभगणयः** ।

भाविकालज्ञानम्

अत्रान्तरे श्री**देवभद्राचार्या** विहारक्रम कुर्वाणा श्री**अणहिलपत्तने** समायातास्तत्रागतैश्चिन्तितम्—' **प्रसन्नचन्द्राचार्येण** पर्यन्तसमये ममाग्रे भणित भवता **जिनवल्लभगणिः** श्री**अभयदेवसूरिपदे** निवेशनीय । स च प्रस्तावोऽधुना वर्तते ।' तत श्री**नागपुरे** श्री**जिनवल्लभगणे**र्विस्तरेण लेख स्व प्रेषित —' त्वया शीघ्र समुदायेन सह **चित्रकूटे** विहर्तव्यम्, येन वयमागत्य चिंतितप्रयोजन कुर्मे ' । तत समागताश्चित्र**कूटे** श्री**जिनवल्लभगणयः**, तथा श्री**देवभद्राचार्या** अपि सपरिवारा । पण्डित**सोमचन्द्रो**ऽप्याकारित, पर नागन्तु शक्तोऽभूत् । ततो महता विस्तरेण श्री**देवभद्राचार्य**' श्री**अभयदेवसूरिपदे** श्री**जिनवल्लभगणि**. सस्थापित । अनेको भव्यलोक श्री**जिनवल्लभसूरीन्** युगप्रधानश्री**मदभयदेवसूरि**पादभक्तान् समालोक्य मोक्षमार्गे प्रवृत्त । **देवभद्राचार्या**दयस्तु पदस्थापन कृत्वा कृतार्थमात्मान मन्यमाना श्री**अणहिल्लपाटका**दिस्थानेषु विहार चक्रिरे ।

अभयदेवसूरिपदे सूरिपदम्

श्री**जिनवल्लभसूरि**भिस्तु स्वायुप्रमाण गणितं यावत् षड्वर्षाण्यवाप्यायुरस्तीत्यागतम् । ततश्चिन्तितमेता[वता] कालेन प्रभूतभव्यलोकप्रतिबोध करिष्याम इत्येव सुस्थितानां तेषां षण्मासातिक्रमेऽकस्माद् देहम[ध्य]न्य जात ज्ञातम् । 'निमेषाद्' यावत् पुनर्निपुण निरूपयन्ति, तावदष्टौ दृष्ट वा(श्वा,सम्) पच्यमानं स्थाने दश वर्षस्थानानि, तत प्रतानदेवगुणेति विधिना ते महासत्त्वा सम्यग्ध्यानेन मार्गे दत्तविप्लावतुष्टता प्रतिपन्नचतु शरणा विहितसर्वसत्त्वक्षामणा दिन-

स्वर्गवासः

---

१ अयं तृतीयखण्डे जिनवल्लभसूरिणा प्रतिष्ठ इत्युक्तचन्द्रस्थापक श्री,सुमतिगणिः ।

त्रितयमन[शन] विधाय सप्तषष्ट्युत्तरैकादशश[त]संवत्सरे ११६७ कार्तिककृष्णद्वादश्या रजनीचरमयामे पञ्चपरमेष्ठिपरावर्तन कुर्वन्त श्रीजिनवल्लभसूरयो महात्मानश्चतुर्थदेवलोक सम्प्राप्ता ।

परमद्यापि येषा भगवतामनदातचरितनिधीना श्रीमरुकोट्टसप्तवर्षप्रमितकृतनिवासपरिशालितसमस्तागमाना समग्रगच्छादृतसूक्ष्मार्थसिद्धान्तविचारसारषडशीति–सार्धशतकाख्यकर्मग्रन्थ– *पिण्डविशुद्धि–*पौषधविधि–*प्रतिक्रमणसामाचारी–सङ्घपट्टक–*धर्मशिक्षा–*द्वादश-

ग्रन्थरचनाऽऽदि

१ षडशीतेरपरनामागमिकवस्तुविचारसार इति दृश्यते, तचात्र सूक्ष्मार्थसिद्धान्तविचारसारविशेषणेन विशेषित सम्भाव्यते । एतच्च भावनगरस्थयाऽऽत्मानन्दसभया वृहद्गच्छीयहरिभद्रसूरि–मलयगिरिविरचितवृत्तिद्वयसमन्वित प्राकाशि । एतदुपरि भाष्यद्वय श्रूयते, मूलग्रन्थकारजिनवल्लभसूरिशिष्यरामदेवगणिविरचित प्राकृतविवरण ( जे भा सूची पृ ४६ ) यशोभद्रसूरिरचिता वृत्तिश्चोपलभ्यते । मेरुवाचककृत विवरण तथोद्धारावचूर्यादिकमप्यन्यत्र पठ्यते ।

२ सार्धशतकस्यापरनाम सूक्ष्मार्थविचारसारेति पठ्यते । धनेश्वरसूरिरचितवृत्त्या सहितमेतद् भावनगरस्थया जैनधर्मप्रसारकसभया प्रसिद्धिमापितम् । एतदुपरि भाष्य तथा वि स ११७० वर्षे मुनिचन्द्रसूरिविरचिता चूर्णिश्च ज्ञायते । चक्रेश्वरसूरि (?)–रामदवगणिविहित प्राकृतविवरण तथा च टिप्पनमपि श्रूयते ।

३ वि स ११७६ वर्ष यशोदेवसूरिणैतस्य विवरण व्यधायि, वृहट्टिपनिका जैनग्रन्थावल्यादौ वि स ११८० वर्षे श्रीचन्द्रसूरिकृता सूचितैनंदीया वृत्तिर्यशादेवसूरिविवरणात् पृथग् न प्रतीयते । तथा वि स १२९५ वर्षे उदयसिंहसूरिणा दीपिका तथा च तपागच्छीयसंवेगदेवगणिना विक्रमीयषोडशशताब्दीपूर्वार्धे बालावबोधो व्यरचि ( पत्तनीयभा सूची द्रष्टव्या ) एतदतिरिक्तावचूरिपञ्जिकाऽऽद्यप्यन्यत्र श्रूयते ।

विक्रमीयसप्तदशशता युत्तरार्धे प शुभविजयगणिसगृहीत श्रीविजयसेनसूरिप्रसादीकृते प्रश्नोत्तर रत्नाकरे उपाध्यायसोमविजयगणिकृतप्रश्नोत्तरे निम्नोल्लिखित पठ्यते—

"पिण्डविशुद्धिविधाता जिनवल्लभगणि खरतरोऽन्यो वा ? इति प्रश्न । अत्रोत्तरम्—जिनवल्लभगणे खरतरगच्छसम्बन्धित्व न सम्भाव्यते, यतस्तत्कृते पौषधविधिप्रकरणे श्राद्धाना पौषधमध्ये जेमनाक्षरदर्शनात् कल्याणकस्तोत्रे च श्रीवीरस्य पञ्चकल्याणकप्रतिपादनाच्च तस्य सामाचारी भिन्ना खरतराणा च भिन्नेति ॥"

—प्रश्नोत्तररत्नाकरे सेनप्रश्ने ( दे ला प्रकाशिते प ४ )

किन्त्वेतत् सुदीर्घदृष्ट्या चिन्तने न समीचीन प्रतिभाति ।

४ एतदाधारेण निर्मितमेक सक्षिप्तमपि पौषधविधानमुपलभ्यते—

"गुरुजिणवल्लहविरइयपोसहविहिपयरणाउ संखेवा ।
दंसियमेय विहाण विसेस उ पुण तओ नय ॥" —पत्तनीयभा० सूची ।

तथा वि स १६१७ वर्षे जिनचन्द्रसूरिणाऽस्य वृत्तिर्व्यरचीति जैनग्रन्थावल्यादौ सूचितम् ।

५ जिनपतिसूरिविरचितबृहद्वृत्तिसमन्वितोऽय 'श्रावक नठालाल दलसुख' इत्यनेन प्रकाशित । वि स १३१३ वर्षे लक्ष्मीसेनेन विरचिताऽस्य लघुवृत्तिःसूचि जैनग्रन्थावल्याम् । हर्षराजोपाध्यायविहिताऽस्य लघुवृत्ति , वि स १६१९ वर्षे साधुकीर्तिगणिरचिताऽवचूरिश्चोपलभ्यते ।

६ एतदुपरि सकलचन्द्रकृता वृत्तिर्जैनग्रन्थावल्या समसूचि ।

* एतादृक्चिह्नाङ्किता ग्रन्था यावज्ज्ञातमद्यावधि मुद्रणाद्वाराऽप्रसिद्धा ।

कुलकरूपप्रकरण---प्रश्नोत्तरशतकं---*शृङ्गारशतक--*नानाप्रकारविचित्रचित्रका-व्यसार--शतसङ्ख्यस्तुतिस्तोत्रादिरूपकीर्तिपताका सकल महीमण्डल मण्डयन्ती, विद्वज्जनमनांसि प्रमोदयति ॥"

चारित्रसिंहगणिना सुमतिगणिविनिर्मितगणधरसार्धशतकबृहद्वृत्तेरेव, प्रोद्धृते गणधरसार्धशतकान्तर्गतप्रकरणे पूर्वोक्तमेव चरित प्रतिपादितम्। श्रीजिनदत्तसूरीयगणधरसार्धशतकस्य सुमतिगणीयविवरणमुपजीव्य जिनेश्वरसूरिशिष्येण वाचक सर्वराजगणिना विरचिताया संक्षिप्तवृत्तावप्युपरि प्रदर्शितमेवेतिवृत्तमुपलभ्यते। वि स १६२९ वर्षे धर्मसागरोपाध्यायेन विरचिते स्वोपज्ञवृत्तिसमन्विते प्रवचनपरीक्षाप्रनाम्नि कुपक्षकौशिकसहस्रकिरणे पूर्वप्रदर्शितमेव चरितमवतारित विवादपूर्वमवमलचावलोक्यते। संक्षिप्तरूप प्रायोऽत्र क्षमाकल्याणादिरचितखरतरगच्छपट्टावल्यादावपि दृश्यते।

जिनवल्लभसूरे पट्टधर प्रस्तुतकाव्यत्रयीकर्तार जिनदत्तसूरिं विहायान्ये के के शिष्या समासन्[१] तद्विषये विशेषतो न व्यज्ञायि, नवर सत्तरि (सत्तति) टिप्पन---जिनवल्लभीयवस्तुविचारसारप्राकृतविवरणकर्तू

शिष्या

रामदेवगणेस्तु परिचयो भवति जेसलमेरभा॰ सूची(पृ ४०, ४६, अप्रसिद्ध॰ पृ. ३४) विलोकनेन। अपवर्गनाममालाकारो जिनभद्रसूरिरपि च तत्प्राते निज जिनवल्लभ-, जिनदत्तसूरिसेवित जिनप्रिय(वल्लभ)-विनेयत्व चाभिज्ञापयति स्म।

---

१ वि स १२९३ वर्षे जिनपालगणिना प्रणीताऽस्य विवृतिरुपरि प्रादर्शि।

२ वि स १४८३ वर्षे तपागच्छनायकसोमसुन्दरसूरिशिष्येण लेखित सटीकमेतदुपलभ्यते। अवचूरिसहित त्वेतद् महेसाणास्थयशोविजयजैनपाठशालया प्रसिद्धिं प्रापितम्। वि स १६४० वर्षे पाल्कपुण्यसागरेण विरचितवृत्तिश्चोपलभ्यते।

-ई जिनवल्लभसूरिविरचित उल्लासिक्कम इत्यादि लघुजिनशान्तिस्तोत्र वि स १३२२ वर्षे धर्मतिलकमुनिरचितया विक्रमीयसप्तदशशताब्द्युत्तरार्धे च गुणविनयगणिगदितया वृत्त्योपेतमुपलभ्यते।

जिनवल्लभसूरिविरचित भावारिवारणादि वीरजिनस्तोत्र वि स १४८७(?) वर्षे जयसागर-गणिप्रणीतवृत्तिसहित ही॰ ह॰ पण्डितेन प्राकाशि।

जिनवल्लभसूरिरचित दुरियरयसमीर' इत्यादि वीरस्तोत्र वि सं १६८७(?) वर्षे समयसुन्दरगणिविनिर्मितवृत्तिसहित सूर्यपुर(सूरत)स्थजिनदत्तसूरिज्ञानभाण्डागारसंस्थया प्रकाशितम्।

जिनवल्लभसूरिरचित नाभेय-शान्ति-नेमि-पार्श्व-वीरजिनचरित्रपञ्चक स्तोत्र वि स १५११ वर्षे साधुसोमगणिविहितवृत्त्या समन्वितमुपलभ्यते।

. एतदतिरिक्तानि चतुर्विंशतिजिनस्तुति-जिनविंशति-वारकल्याणकस्तोत्रादिस्तोत्राणि अपि अत्र दुर्लभमुपलभ्यन्ते। इत्येतत्स्तोत्रम प्रत्या जिनरत्नकोशादिनामकृतिनो मुद्रित (पत्तनीयभा॰ सूची)। अत्र प्रकाशितानि स्तोत्राणि जिनवल्लभसूरिविरचितानि जैनस्तोत्रसन्दोहादिषु निर्दिष्टानि पञ्चकल्याणक-तीर्थंकरचरित्र-पूर्वनिर्दिष्टस्तुतिस्तोत्रसूचीस्थितानि न निर्धारितानि।

जिनवल्लभसूरिसन्तानीयै प्रभूतैर्विद्वद्भिर्ग्रन्थकारैर्ग्रन्थप्रारम्भप्रान्ते जिनचै-
प्रशंसका
त्यादिप्रतिष्ठालेखप्रारम्भप्रान्तादौ निजपूर्वजपरिचायकप्रशस्तिप्रदर्शने
च प्रस्तुतोऽयं सूरिर्भूरिप्रशंसापूर्वमस्मारि । तत उद्धृत्यात्र किञ्चित्
प्रदर्श्यते तथाहि—

ग्रा

वि सं १२९५ वर्षे चित्रकूटवास्तव्य सा प्रल्हाकेन लेखिताया पुस्तिकायाम्—
"चारित्रिचूडामणिश्रीजिनवल्लभसूरिसन्तानीयश्रीजिनेश्वरसूरिपदपंकजमधु-
करेण" इत्यादि । —जे० भा० सूची ( पृ २६ )

[1]वि सं १३०७ वर्षे पूर्णकलशगणि —
"तस्मिन् सोऽभयदेवसूरिरभवत् क्लृप्ताङ्गवृत्तिस्तत *
संविग्नो जिनवल्लभो युगवरो निर्यात्लिताराऽम्बरम् ।"
—प्राकृतद्व्याश्रयवृत्तौ ( प्रश० श्लो० २ )

[2]वि सं १३१२ वर्षेऽभयतिलकगणि —
"*तच्छिष्यो जिनवल्लभो गुरुरभाच्चारित्रवैचि(पात्रि)त्र्यत
सारोद्धारसमुच्चयो नु निखिलश्रीतार्थसार्थस्य य ।
सिद्धाकर्षणमन्त्रको न्वखिलसद्विद्याभिरालिङ्गनात्
कीर्त्या सर्वगया प्रसाधितनभोयानाख्यविद्यो ध्रुवम् ॥"
—सं द्व्याश्रयवृत्तौ ( प्रश० श्लो० ४ )

'जज्ञे *तदीयपदवीनलिनीमरालः स्वैभ्यश्चरित्ररमया जिनवल्लभाख्य ।'
—न्यायालङ्कारप्रान्ते ( जेसलमेरभा० सूची पृ ४८ )

[3]वि सं १३१२ वर्षे चन्द्रतिलकोपाध्याय —

---

१ समर्थिता विक्रमराजवर्षे द्वयान्तरिक्ष-ज्वलनेन्दुसङ्ख्ये ।
पुष्यार्कशस्यामलफाल्गुनैकादशीतिथौ द्व्याश्रयवृत्तिरेषा ॥
—प्राकृतद्व्याश्रयवृत्ति ( प्रश० श्लो० १४ )

२ अब्दे द्वादशभिस्त्रयोदशशते श्रीविक्रमाब्द द्वी(द्वि)य
श्रीप्रह्लादनपत्तन शुभदिने दीपोत्सवऽपूर्यत ।
—सं द्व्याश्रयवृत्ति ( प्रश० श्लो० १३ )

३ श्रीमद्वीसलदेवगूर्जरधराधाशेऽधिपे भूभुजा
पृथ्वीं पालयति प्रतापतपने श्रीस्तम्भतीर्थे पुरे ।
चक्षु-शीतकर-त्रयोदशमित सवत्सरे वैक्रमे
काव्य भव्यतम समर्थितमिद दीपोत्सव वासरे ॥
—अभयकुमारचरितम् ( प्रश० श्लो० ४७ )

"श्रीजिनवल्लभसूरिस्तत्पट्टेऽभूद् विमुक्तमद्भसूरि ।
भव्यजनबोधकारी कल्मषहारी सदोद्यतविहारी ॥
तर्क-ज्योतिरलङ्कृतीर्निज-परानेकागमाँल्लक्षण
यो वेत्ति स्म सुनिश्चित सुविहितश्चारित्र(त्रि)चूडामणि ।
नानावाग्गडमुख्यकान् जनपदान् श्रीचित्रकूटस्थिता
चामुण्डामपि देवतां गुणनिधिर्यो बोधयामासिवान् ॥"
—अभयकुमारचरिते ( प्रश० श्लो० १०–११ )

[1]वि स १३१७ वर्षे लक्ष्मीतिलकगणि —
" विद्वत्ताऽतिशयार्द्धि-सयमरमात्रैमातुर सर्वतो-
वक्त्रो यस्य यश कुमार उदित श्रीतारकाधीश्वरम् ।
चित्र न्यक्कृतवांस्त्रिलोकमपि च प्रासाधयल्लीलया
तीर्थे श्रीजिनवल्लभो गणपति शास्ति स्म सोऽय तत ॥"
—जिनेश्वरसूरीयश्रावकधर्मवृत्तौ ( प्रश० श्लो० ४ )

[2]वि स १३२० वर्षे प्रबोधचन्द्रगणि —
"निद्रा मा ममताकुला जननि ! वाग्देवि ! त्वमाश्वासयै-
ता धातस्त्वमिमां प्रबोधय गिर ब्रह्मन् ! स्वय मा मुह ।
आसीनोऽभयदेवसूरिमुनिराद्-पट्टे जगद्वल्लभ
सूरि श्रीजिनवल्लभ' स्व(मु)रसत सिद्ध तवैवेप्सितम् ।"
• —सन्देहदोलावलिबृहद्वृत्तौ ( प्रश० श्लो० ९ )

---

१ श्रीवीजापुरवासुपूज्यभवने हैम सदण्डो घटो
यत्रारोप्यत वीरचैत्यमखिधत् श्रीभीमपल्ल्या पुरि ।
तस्मिन् वैक्रमवत्सरे मुनि-शशि-श्वेतेन्दुमाने चतु-
र्दश्यां माघसुदीह चाचिगनृपे जावालिपुर्यां विभौ ॥
वीरादद्-विधिचैत्यमण्डनाजनाथो ॥ चतुर्विंशति-
शौधेषु ध्वजदण्ड-कुम्भकलशौ हैमौ महिष्ठैर्महै ।
श्रीमत्सूरिजिनेश्वरा युगवरा प्रास्थुरस्मिन् क्षणे
दीक्षाऽस्तु कृतिरेषिदाऽपि गमगात् पुरिप्रतिष्ठारम् ॥
—ख ० प ० व ० ब० ( प्रश० श्लो० १६–१७ )

२ विक्रमार्के प(ञ्च)र-कर-निधि-रूपमित मघा प्रथमाद्रे ।
दयमानी प्रह्लादनपुरेऽस्मी धर्मदिशा ग्रेस ॥–मे० दा० वृ० ।

¹वि स १३२२ वर्षे धर्मतिलकमुनि —

"इह हि किलैकदा वर्णनातिक्रान्तानुपममभागधेया सुगृहीतनामधेया सकललोकसश्लाघ्यमहार्घ्यविमलगुणमणिश्रेणय सविग्नमुनिजनव्रातचूडामणय स्वप्रज्ञाऽतिशयविशेषविनिर्जितामरसूरय श्रीजिनवल्लभसूरयः श्रीअजित–शान्त्यो स्तवन चतुर्विधश्रीश्रमणसङ्घश्रेयस्कर सप्तदशवृत्तप्रमाण विशेषत पाक्षिकादिपर्वणि पाठ्य चिकीर्षव "

—जिनवल्लभीयाजितशान्तिस्तववृत्तिप्रारम्भे ।

वि स १३२६ (?) वर्षीये सङ्घपुरजिनालयशिलालेखे—

"अपमलगुणग्रामोऽमुष्मादधीतजिनागम
प्रवचनधुराधौरेयोऽभूद् गुरुर्जिनवल्लभः ।
सकलविलसद्विद्यावल्लीफलावलिविभ्रमं
प्रकरणगणो यस्यास्येन्दो सुधा विभृतेतराम् ॥ १०१ ॥
सम्यक्त्वबोधचरणैस्त्रिजगज्जनौघचेतोहरैरगुणै परिरब्धगात्र ।
य वीक्ष्य नि स्पृहशिखामणिमार्यलोक सस्मार सप्रमदमार्यमहागिरीणा ॥१०२॥"

—बीजापुरवृत्तान्ते ( पृ० ४ )

²वि स १३२८ वर्षे प्रबोधमूर्तिगणि ( जिनप्रबोधसूरि )—

' चान्द्रे कुलेऽजनि गुरुर्जिनवल्लभाख्यो–
ऽर्हच्छासनप्रथयिताऽद्भुतकृच्चरित्र ।' —कातन्त्रदुर्गपदप्रबोधे

वि स १२७८–१३३१ (?) वर्षे जगड्डकवि —

'धनु सु जिणवल्लहु वक्खाणि नाण–रयणकेरी छइ खाणि ।
बइतालीस सुद्ध पिंडु विहरेइ त्रिविधु मंदिरु जगि प्रगटु करेइ ॥'

—सम्यक्त्वमाईचउपई ( प्रा गू का सग्रह पृ ८१, गा ४१ )

वि स १३३९ (?) वर्षे प्रमानन्दाचार्य —

"*तस्मान्मुनीन्दुर्जिनवल्लभोऽथ तथा प्रथामाप निजैर्गुणौघै ।
विपश्चितां सयमिनां गणे च (च वर्गे) धुरीणता तस्य यथाऽधुनाऽपि ॥"

—ऋषभपञ्चाशिकावृत्तौ, वीतरागस्तोत्रविवरणेऽपि ।

---

१ नयन-कर-शिखीन्दुमित विक्रमवर्षे तपस्यसितषष्ठ्याम् ।
वृत्ति समर्थिनाम्न्या मान च सविंशतिस्त्रिशती ॥—अ पृ प्रान्ते ।

२ विक्रमनृपवर्षेऽष्टाविंशत्यधिके त्रयोदशशते । सम्पूर्णं शुच्यां प्रतिपदि राधेऽश्विन्या गुरौ वारे ॥
—जेसलमेरभा० सूची ( पृ १७, अप्र० ५७ )

[1]वि स १४११ वर्षे तरुणप्रभसूरि —

"*तदीयपादद्वयपद्मसेवामधुव्रत श्रीजिनवल्लभोऽभूत् ।
यदङ्गरङ्गे व्रतनर्तकेन किं नृत्यता कार्तिधन न लेभे ? ॥

—श्रावकप्रतिक्रमणसूत्रविवरणे ( प्रश० श्लो० ३ )

[2]वि स १४१२ वर्षे भुवनहितोपाध्याय —

" जिनवल्लभ शागनावल्लभो प्रिय
यद्वीयगुणगौरव श्रुतिपुटेन सौ(सु)धोपम निपीय
शिरसोधुनापि कुरुते न कस्ताडव ? ॥ २० ॥"

—जैनलेखसङ्ग्रहे ( पू० नाहरसगृहीते ख० १, पृ० ६० )

[3]वि स १४२२ वर्षे सङ्घतिलकाचार्य —

"*तत्पट्टपूर्वाचलचूलिकाया भास्वानिव श्रीजिनवल्लभाख्य ।
सच्चक्रसम्बोधनसावधानबुद्धि प्रसिद्धो गुरुमुख्य आसीत् ॥"

—सम्यक्त्वसप्ततिवृत्तौ ( प्रश० श्लो० ३ )

[4]वि. सं. १४२९ ( ? ) वर्षे सोमतिलकसूरि —

"सविघ्नचूडामणयो न केषां स्युर्वल्लभा श्रीजिनवल्लभास्ते ।
मूर्तोऽपि यद्गीर्भिरिनामसूर्तमात्मानमुत्तुङ्गगुणै ससञ्ज ॥"

—शीलोपदेशमालावृत्तौ शीलतरङ्गिण्याम् ( प्रश० श्लो० ३ )

[4]वि स १४२९ वर्षे देवेन्द्रसूरि —

"*तदनु जिनवल्लभाख्य प्रख्यात समयकनककषपट्ट ।
यत्प्रतिबोधनपटहोऽधुनाऽपि दध्वन्यते जगति ॥"

—प्रश्नोत्तररत्नमालावृत्तौ ( प्रश० श्लो० ९ )

---

१ शशि-शशि-वेदेन्दुमित संवति सति पत्तने महानगरे ।
दीपोत्सवे च लिलेख सुगमां दिनकृत्यविवृतिरि(मि)यम् ॥
—श्रा प्र सू वि (प्रश० श्लो० ९१)

२ नयन-चन्द्र-पयोनिधि-भूमित व्रजति विक्रमभूपतिवत्सरे ।
बहुलषष्ठीदिने शुचिमासगे महीमचीकरदसमयं सुधी ॥—जै० ले० स० (पृ० ६२)

३ अस्मच्छिष्यवरस्य सोमतिलकाचार्यप्रभुस्याग्रुना
श्रीदेवेन्द्रमुनीश्वरस्य वचसा सम्यक्त्वसप्ततिके ।
श्रीमद्विक्रमवत्सरे द्वि-नयनाम्भोधि क्षपाकृत्प्रमे
श्रीसारस्वतपत्तने विरचिता संघाग्रत्र वृत्तिका ॥ —स० स० वृ० ।

४ तस्यानुजेन देवेन्द्रसूरिणा विक्रमे । नन्द-युग्म-पयोराशि-शशाङ्कप्रमवत्सरे ॥
प्रश्नोत्तररत्नमालाया वृत्तिरियं मुदा । रचिता च नगरे श्रीमुनिचन्द्रसूरिभि ॥
—प्र र वृ (प्रश० श्लो० १७-१८)

[1]वि स १४६८ वर्षे वर्धमानसूरि —

" श्राद्धप्रबोधप्रवणस्तत्पट्टे जिनवल्लभः । सूरिर्वल्लभता भेजे त्रिदशाना नृणामपि ॥ "

—आचारदिनकरे ( प्रश० श्लो० १४ )

प्रायो विक्रमीयपञ्चदशशतके चित्रिता जेसलमेरुदुर्गीयजैनभाण्डागारादै- ताडपत्रात्मकपुस्तिकाया काष्ठपट्टिकाया जिनवल्लभसूरि-प्रतिकृतिरप्युपलभ्यते ।[2]

वि स १४९७ वर्षे प्रतिष्ठिते सम्भवजिनालयप्रशस्तिशिलालेखे—

" तत क्रमेण श्रीजिनचन्द्रसूरि-नवाङ्गीवृत्तिकार-श्रीस्तम्भनपार्श्वनाथप्रकटीकारश्रीअभय- देवसूरि-श्रीपिंडविशुद्धयादिप्रकरणकारश्रीजिनवल्लभसूरि-" इत्यादि

—जेसलमेरभा० सूची ( परि० पृ ६७,७९ )

वि स १५०३ वर्षे जिनवल्लभीयभावारिवारणादिस्तोत्रवृत्तिकारो जयसागरगणि —

" श्रीवीरशासनाम्भोधिसमुल्लासनशीतगो । सूरेरभयदेवस्य नवाङ्गीवृत्तिवेधस ॥

पट्टालङ्कारसारश्री सूरि श्रीजिनवल्लभः ।" —जे० भा० सूची ( पृ ९७ )

वि स १५०४ वर्षे महेश्वरकवि —

" एतत्कुले श्रीजिनवल्लभाख्यो गुरुस्तत श्रीजिनदत्तसूरि ।

सुपर्वसूरिस्तदनुक्रमेण बभूव वर्यो बहलैस्तपोभि ॥ "

मन्त्रिमण्डनवशवर्णने काव्यमनोहरे ( स० ७, श्लो० ३९ )

[3]वि स १५१९ वर्षे जिनवल्लभसूरिरचितनाभेय-शान्ति-नेमि-पार्श्व-वीर जिनस्तोत्रचरितपञ्चकवृत्तिकार साधुसोमगणि —

" जिनवल्लभसूरीन्द्रसूक्तिमौक्तिकपङ्क्तय । दर्शितार्था सुदृष्टीना सुखग्राह्या भवन्त्विति॥ "

—चरित्रपञ्चकवृत्तिप्रान्ते ( श्लो० ६ )

[4]वि स १५४४ वर्षे कमलसयमोपाध्याय —

" विचारवद्वाङ्मयवारधाता गुरुर्गरीयान् जिनवल्लभोऽभूत् ।

सूत्रोक्तमार्गाचरणोपदेशप्रावीण्यपात्र नहि यादृशोऽन्य ॥ "

—उत्तराध्ययनवृत्तौ सर्वार्थसिद्धौ ( प्रश० श्लो० ४ )

---

१ पुरे नन्दवनाख्ये च श्रीजालन्धरभूषणे । अनन्तपालभूपस्य राज्ये कल्पद्रुमोपमे ॥
श्रीमद्विक्रमभूपालाद्वसुषण्मनुसङ्ख्यके । वर्षे कार्तिकराकाया ग्रन्थोऽय पूर्तिमाययौ ॥—C

२ अस्य सक्षिप्तपरिचयो जे० भा० सूची ( अप्रसिद्ध० पृ ५४ ) दर्शनेन भविष्यति ।

३ जेसलमेरभा० सूची ( प्रस्ता० पृ० १३, ४ ), पत्तनभा० सूची ।

४ जेसलमेरभा० सूची ( प्रस्ता० पृ० १३, ४-५ )

¹वि स १४११ वर्षे तरुणप्रभसूरि —

"*तदीयपादद्वयपद्मसेवामधुव्रत श्रीजिनवल्लभोऽभूत् ।
यदङ्गरङ्गे व्रतनर्तकेन किं नृत्यता कीर्तिधनं न लेभे ? ॥

—श्रावकप्रतिक्रमणसूत्रविवरणे ( प्रश० श्लो० ३ )

²वि स १४१२ वर्षे मुनिनहितोपाध्याय —

" जिनवल्लभ शागनावल्लभो प्रिय
यद्रीयगुणगौरव श्रुतिपुटेन सौ(सु)धोपम निपीय
शिरसोधुनापि कुरुते न कस्ताडव ? ॥ २० ॥"

—जैनलेखसङ्ग्रहे ( पू० नाहरसंगृहीते ख० १, पृ० ६० )

'वि स १४२२ वर्षे सङ्घतिलकाचार्य —

"*तत्पट्टपूर्वाचलचूलिकायां भास्वानिव श्रीजिनवल्लभाख्य ।
सच्चक्रसम्बोधनसावधानबुद्धि प्रसिद्धो गुरुमुख्य आसीत् ॥"

—सम्यक्त्वसप्ततिवृत्तौ ( प्रश० श्लो० ३ )

³वि स १४२९ ( ? ) वर्षे सोमतिलकसूरि —

"सविम्नचूडामणयो न केषां स्युर्वल्लभा श्रीजिनवल्लभास्ते ।
मूर्तोऽपि यद्गीर्भिविनाममूर्तमात्मानमुत्तुङ्गगुणै ससज्ज ॥ "

—शीलोपदेशमालावृत्तौ शीलतरङ्गिण्याम् ( प्रश० श्लो० ३ )

⁴वि स १४२९ वर्षे देवेन्द्रसूरि —

" *तदनु जिनवल्लभाख्य प्रख्यात समयकनककपपट्ट ।
यत्प्रतिबोधनपटहोऽधुनाऽपि दध्वन्यते जगति ॥ "

—प्रश्नोत्तररत्नमालावृत्तौ ( प्रश० श्लो० ९ )

---

१ शशि-शशि-वेदेन्दुमित संवति मति पत्तने महानगरे ।
दीपोत्सवे च लिलेख सुगमां दिनकृत्यविवृतिरि(मि)यम् ॥
—श्रा प्र. सू. वि (प्रश० श्लो० १२)

२ नयन-चन्द्र-पयोनिधि-भूमित प्रजति विक्रमभूपदिनेशसि ।
बहुलपक्षादिने शुचिमासगे महीमधीरदवमर्य सुधी ॥—जै० ले० सं० (पृ० ६२)

३ अस्मद्विनेयवरस्य सोमतिलकाचार्याचार्यस्याधुना
श्रीदेवेन्द्रमुनीश्वरस्य वचसा सम्यक्स्वयसत्मसते ।
श्रीमद्विक्रमतो नरे द्वि-नयनाम्भोधि क्षपाकृत्प्रमे
श्रीसारस्वतपत्तने विचिता दीपत्सवे वृत्तिका ॥ —शी० त० पृ० ।

४ तस्यानुग्रह देवेन्द्रसूरिणा विक्रमार्कत । नन्द-युग्म-पयोराशि-शशाङ्कप्रमवत्सरे ॥
प्रश्नोत्तररत्नमालाया वृत्तिरियं मुदा । कारिता च रमाम्रदे श्रीमुनिप्रभसूरिभि ॥
—प्र र वृ ( प्रश० श्लो० १७-१८ )

"सोऽभूदभयदेवाख्य, सूरि श्रीजिनवल्लभः।
ज्ञान-दर्शन-चारित्रपात्र श्रेजे ततो भृशम् ॥
येन चण्डाऽपि चामुण्डा दर्शन प्रापिता गुणै ।
कर्ता पिण्डविशुद्ध्यादिशास्त्राणा तत्त्वशालिनाम् ॥"
—सम्बोधसप्ततिवृत्तौ ( प्रश० श्लो० ७-९ )

'वि स १६९४ वर्षे ज्ञानविमलोपाध्याय —
" *तत्पट्टे च विरेजु कर्मग्रन्थादिशास्त्रकर्तार ।
वैराग्यैकनिधाना श्रीमज्जिनवल्लभाचार्या ॥"
—शब्दभेदप्रकाशटीकायाम् ।

इत्याद्यवदातावलोकनेन प्रस्तुतापभ्रशकाव्यत्रयीप्रदर्शितविधिपथप्रचारयितुरेतत्काव्य-त्रयीकर्तृजिनदत्तसूरिपूज्यस्य जिनवल्लभसूरे सम्यक् परिचयो भविष्यतीति विस्तारभयाद् विरम्यते ।

---

## जिनदत्तसूरि. ।

सुप्रसिद्धिमधिगतस्य परमपितामह( बडा दादा )प्रत्यया श्वेताम्बरजैनानुयायि भिर्विशेषत खरतरगच्छीयै प्रभूतपुरादिषु भक्तिप्राग्भारेणेदानीमपि स्तूप-प्रतिमा--प्रतिकृति-पादुकाप्रभृतिप्रतिष्ठापनपूर्वं प्रपूज्यमानस्य चतुरचित्तचमत्कृतकारिचारुचरितस्य प्रस्तुतापभ्रशकाव्यत्रयीप्रणेतुर्जिनदत्तसूरे परिचय साम्प्रत साम्प्रत इति स एव प्रस्तूयते ।

प्रस्तुतसूरिणा स्वगुर्वादे स्वायतिवृत्ताऽऽदेश्च प्रकटाप्रकटरूप परिचय स्वयमपि समकारि स्वकीयकृतिसन्दर्भेषु । यन्मध्यादेषा काव्यत्रयी तत्र प्रत्यक्षा तथा च तत्कृतिरूप गणधरसार्धशतक गुरुपारतन्त्र्य नाम ग्रन्थद्वयमप्यत्र परिशिष्टप्रदर्शित-मुपयुक्त प्रेक्ष्यते ।

प्रदृश्यतेऽद्यापि प्रस्तुतस्य सूरेर्निशीथचूर्ण्यादि पुस्तक प्रतिकृत्योपवर्णप्रमुख च जेसलमेरुदुर्गादो । किञ्चैतत्सूरिशिष्येण जिनरक्षितसाधुना वि स ११७० वर्षे

---

१ श्रीमद्विक्रमनगरे राजच्छ्रीरायसिंहनृपराज्ये । मनोकगरवाक्प्रमोदसूर्योदय सन्दर ॥
चतुराननवदनेन्द्रिय-रस-वसुधासमित स्वर्द्वर्षे । नामद्विकमनृपतौ निरन्तरऽतार ष्टवर्ष ॥
—P P २, १२८

२ जेसलमेरभा० सूची ( पृ २३, ३१ अप्रसिद्ध० पृ ५० ) विलोकनीया ।

'वि स १९९२ वर्षे पद्ममन्दिरगणि —

"प्राप्तोपसम्पद्विभवस्तदन्ते द्विधाऽपि सूरिर्जिनवल्लभोऽभूत् ।
जग्रन्थ यो ग्रन्थमनर्थसार्थप्रमाथिन तीव्रक्रियाकठोर ॥"

—ऋषिमण्डलवृत्तौ ( प्रश० श्लो० ७ )

'वि स १६१९ वर्षे साधुकीर्तिगणिना जिनवल्लभीयसङ्घपट्टकस्यावचूरिर्व्यधायि।

'वि स १६४० वर्षे पाठकपुण्यसागर —

"स जयताज्जगतीजनवल्लभ परहितैकपरो जिनवल्लभः ।
चतुरचेतसि यस्य चमत्कृतिं रचयतीह चिर रुचिर वच ॥"

—जिनवल्लभीयप्रश्नोत्तरषष्टिशतककाव्यस्य लघुवृत्तौ ।

'वि स १६४६ वर्षे समयसुन्दरगणि —

"कृत्वा समीपेऽभयदेवसूरिं येनोपसम्पद्ग्रहण प्रमोदात् ।
पपौ रहस्यामृतमागमानां सूरिस्तत श्रीजिनवल्लभोऽभूत् ॥"

—अष्टलक्षार्थी ( प्रश० श्लो० ११ )

'वि स १६५१ वर्षे पाठकगुणविनय —

---

१ एनां जेसलमेरुनाम्नि नगरे प्रारब्धवानश्विनी-
कोष्ठे वाग्गुरुपद्ममन्दिरगणि पूर्णीचकारात्तु च ।
वर्षे वह्नि-शराङ्गुगोडुपमिते वैशाखशुक्लत्रयो-
दश्यां शुक्रकरोद्भवे शुभतमे योगेऽल्पधीशेखर ॥ —ऋ. म वृ

२ तच्छिष्येण सुविहिता सुगमय साधुकीर्तिगणिनाऽपि ।
एकोनविंशममधिकषोडशसंवत्सरे प्रवरे ॥
माघस्य शुक्लपक्षे पञ्चम्यां प्रवरयोगपूर्णायाम् ।
विबुधे प्रपठ्यमाना समन्तसुखदायिनी भवतु ॥ —सङ्घ० अवचूरि ।

३ समर्थिता विक्रमसम्पुरेऽसौ वृत्तिर्विधिपद-वार्धि-रसेन्दु १६४० वर्षे ।
गुरौ शुभश्रावणशुक्लदशम्यां श्रीजिनचन्द्राभिधसूरिराज्ये ॥— प्रश्नो० वृत्ति ।

४ श्रीविक्रमनृपवर्षात् समये रस-जलधि-राग-सो[म]प्रमिते ।
श्रीमल्लाभपुरेऽस्मिन् वृत्तिरियं पूर्णतां नीता ॥ —अ र

५ श्रीजिनचन्द्रगुरूणां तेषां श्रीमत्सुगुरुपदकमलानाम् ।
राज्ये विजयिनि येना वृत्तिर्विरचे विधमहल ॥
वाचकवरगुणविनयैः श्रीमज्जयसोमपाठकविनेयैः ।
मुनवर्षपर्वतापि शशि-शर-कायेन्दु १६५१ मितवर्षे ॥ —ख. प्र. वृ.

" तच्छिष्यो **जिनदत्त**सूरिरभवच्चारित्रिणामग्रणी-
यों मध्येसमय विधि च विषय सत्पारतन्त्र्य तथा ।
एता सिद्धपदत्रयीं त्रिपथगा लब्ध्वा यथा मातृका
व्याशिष्टाहितलक्षण कृतमुखो विश्व यथा शाब्दिक ॥
लोला दोलाधिरोहात् कननशिखरिण कन्दरोत्सङ्गरङ्ग-
क्षोणीमक्षूणशोभानधिमविशयिता पूर्णहन्नेत्र-कर्णा ।
जीवातून् श्रोत्रवृत्तेर्निशमनमनसामन्तरङ्ग न मात
शङ्के गानच्छलेन त्रिदिनयुवतयो यद्गुणानुद्गिरन्ति ॥ "
—पञ्चलिङ्गीनिवरणप्रान्ते ( श्लो० ९-१० )

" जज्ञे श्री**जिनदत्त**यत्यधिपति शिष्यस्ततस्तस्य य
सिद्धान्ताद् विधि-पारतन्त्र्य-विषयाभिख्यामभिख्यान्वित ।
आसाद्य त्रिपदीं विधुर्बलिमिव व्यध्व वृषान्नसन
चिच्छेद प्रतिपन्थिन सुमनसा व्यक्तक्रमप्रक्रम ॥
लावण्यावसथो यथा पतिरपा नो पर्वतक्षोभित
शृङ्गीव द्युसदा सुवर्णसुभगो नोच्चै सुरागाश्रय ।
य कल्पद्रुरिव द्रुतार्पितफलो नोद्यत्सदापल्लव
साम्य यस्य तथापि शस्ययशसस्तै कुर्वते बालिशा ॥ "
—सङ्घपट्टकविवृतिप्रान्ते ।

वि स १२८९ वर्षे पूर्णभद्रगणि —
" भास्वांस्तत समुदगा**ज्जिनदत्त**सूरि-
र्भव्यारविन्दचयबोधविधानदक्ष ।
गाव स्फुरन्ति विधिमार्गविकासनैक-
तानास्तमोविदलनप्रवणा यदीया ॥ "
—धन्य शालिभद्रचरित्रे ( जे भां सूची पृ २ )

वि स १२९३ वर्षे जिनपालगणि —
" **जिनदत्त** इति श्रीमान् सूरिस्तत्पदभूषण ।
जज्ञे स ज्ञानमाणिक्यरोहणो विनिपोषण ॥ "
—द्वादशकुलकविवरणप्रान्ते ।

---

१ तच्छब्देनात्राग्रेऽपि च पूर्वोक्तनिवन्धभूरे परामश ।

धारानगर्यां लिखितानि, ब्रह्मचन्द्रगणिना च वि स ११७१ वर्षे पत्तने जयसिंह-देवराज्ये लिखितानि कविपल्हप्रणीतानि पट्टावली( जिनदत्तसूरिस्तुति )पद्यानि तत्र परिशिष्ट( ४ )प्रान्ते परिनिदर्शितानि पाठकैः प्रत्यक्षीकरिष्यन्ते ।

श्रीमतश्चास्य सूरेः शिष्येण स्थिरचन्द्रगणिना वि स १२०७ वर्षेऽजयमेरौ दुर्गे पल्लीभङ्गे पञ्चाशकवृत्तेस्त्रुटितपुस्तकं गृहीत्वा गतं स्वयं लिखितमासीत्, तदपि विद्यते जेसलमेरुदुर्गभाण्डागारे ।

अपवर्गनाममालाकारो जिनप्रियविनेयो जिनभद्रसूरिर्जिनवल्लभ–जिनदत्तसूरि-सेवकत्वं निजं न्यदर्शयत् ।

पूर्वपरिचायितजिनवल्लभसूरेः पट्टप्रतिष्ठितेनानेन जिनदत्तसूरिणा निजपट्ट-धरपदवी जिनचन्द्रसूरये स्वयं व्यतारीत्यादीतिवृत्तोऽप्युपलभ्यते । यस्य विनेयेन जिनमत-( ? पति )यतिना वि स १२१५ वर्षे विलिखिता राक्षसकाव्यटीकाऽऽदिपुस्तिका जेसलमेरुदुर्गभाण्डागारे दृश्यते ।

सूरिवर्यस्यास्य शिष्य–प्रशिष्यपरम्पराप्रोद्भूतैः प्रभूतैः पण्डितप्रकाण्डैः प्रणीतेषु प्रचुरपुस्तक–प्रतिमा–प्रासाद–प्रशस्तिप्रभृतिषु प्रादुष्कृतं प्रविततमेतदायं प्रोज्ज्वलं सुयशः परिपठ्यते । प्रेक्षावतां प्रीतये ततः प्रोद्धृत्यात्र किञ्चित् प्रदर्श्यते । तथाहि—

वि स १२२३–७७ वर्षेषु सूरिपदे विद्यमानो जिनदत्तसूरिपट्टधरजिन-चन्द्रसूरिशिष्यो जिनपतिसूरिः—

---

१ पा भां सूची (पृ ६)।

२ ज भा सूची (पृ ४५)।

३ "पूज्यश्रीजिनवल्लभप्रभुपदाम्भोराजहंसोद्यश -
सूरिर्श्री जिनदत्तदत्तपदवीराजीविनीभास्वतः ।
शिष्यः श्रीजिनचन्द्रसूरिसुगुरोर्विद्यासरस्वानिति
व्याख्यागविधिर्व्यधाज्जिनपतिः सूरिः प्रबोधोदयम् ॥"
—जिनपतिसूरि (ज भां सूची पृ ६०)

"बाल्ये श्रीजिनदत्तसूरिविभुभिर्यो दीक्षितः शिक्षितो
दत्त्वाऽऽचार्यपदं स्वयं निजपदे तैरेव संस्थापितः ।
स श्रीमज्जिनचन्द्रसूरिसुगुरुर्भाग्यैर्भुवि ...
... ॥
—पूर्णभद्रगणि (पा भां सूची पृ २)

४ [illegible] सूची (अप्रसिद्ध० पृ ५१) द्रष्टव्या ।

" तच्छिष्यो **जिनदत्त**सूरिरभवच्चारित्रिणामग्रणी-
यों मध्येसभय निर्वि च विषय सत्पारतन्त्र्य तथा ।
एता सिद्धपदत्रयीं त्रिपथगा लब्ध्वा यथा मातृका
व्याशिष्याहितलक्षण कृतमुखो विश्व यथा शाब्दिक ॥
लोला दोलाविरोहात् कननशिखरिण कन्दरोत्सङ्गरङ्ग-
क्षोणीमक्षूणशोभानविभविशयिता पूर्णहृन्नेत्र-कर्णा ।
जीवातून् श्रोत्रवृत्तेर्निशमनमनसामन्तरङ्ग न मात
शङ्के गानच्छलेन त्रिदिवयुवतयो यद्गुणानुद्गिरन्ति ॥ "

—पञ्चलिङ्गीविवरणप्रान्ते ( श्लो० ९-१० )

" जज्ञे श्री**जिनदत्त**यत्यधिपति शिष्यस्ततस्तस्य य
सिद्धान्ताद् विधि-पारतन्त्र्य-विषयाभिख्यामभिख्यान्वित ।
आसाद्य त्रिपदीं त्रिवुर्वलिभिन्न व्यध्व वृषभ्नसन
चिच्छेद प्रतिपन्थिन सुमनसा व्यक्तक्रमप्रक्रम ॥
लावण्याम्रसत्रो यथा पतिरपा नो पर्वतक्षोभित
शृङ्गीन सुसदां सुवर्णसुभगो नोच्चै सुरागाश्रय ।
य कल्पद्रुरिव द्रुतार्पितफलो नोद्यत्सदापल्लव
साम्य यस्य तथापि शस्यशसस्तै कुर्वते बालिशा ॥ "

—सङ्घपट्टकविवृतिप्रान्ते ।

वि स १२८९ वर्षे पूर्णभद्रगणि —

" भास्वास्तत समुदगाज्जिनदत्तसूरि-
र्भव्यारविन्दचयबोधविधानदक्ष ।
गाव स्फुरन्ति विधिमार्गविकासनैक-
तानास्तमोविदलनप्रवणा यदीया ॥ "

—धन्य शालिभद्रचरित्रे ( जे भां सूची पृ २ )

वि स १२९३ वर्ष जिनपालगणि —

" **जिनदत्त** इति श्रीमान् सूरिस्तत्पदभूषण ।
जज्ञे स ज्ञानमाणिक्यरोहणो विधिपोषण ॥ "

—द्वादशकुलकविवरणप्रान्ते ।

---

१ तच्छन्देनाग्रेऽपि च पूर्वोक्तजिनवल्लभसूरे परामर्श ।

वि स १२९९ वर्षे सुमतिगणि —

" क्वैता श्रीजिनदत्तसूरिसुगुरोर्वाण्योऽब्धिमंथ्योपमा
क्वाह दुर्गमहाटवीमृगनिम प्रास्तान्तरप्रातिभ ।
तद्भक्त्याहितबुद्धिरुद्धतमति कर्णे यथा कुण्डल
कुर्वन् वेधविविच्युतेऽहमपि तल्लुप्स्ये तथा हास्यताम् ॥
महात्मन पुण्यनिधेस्तथापि तस्यैव माहात्म्यवशाद् विधास्ये ।
वृत्तिं विचित्रा गणभृच्छतस्य सार्धस्य सक्षिप्ततरां सुबोधाम् ॥ + +

तत्र च प्रवचनप्रभावनाप्रासादोत्तुङ्गशिखरखरतरमरुत्तरङ्गरङ्गचारचामीकरोद्दण्ड-दण्डनिर्धौतपूतप्रवलकलकलानिद्राणरणत्किङ्किणीक्वाणपटपटायमानधवलध्वजपटायमान श्रीमदुज्जयनीदुर्जयनीरप्रवरधाचेपिद्वेपिभोगियोगिनीचक्रचक्रचित्रचरित्रचमत्कारकारि(री) श्रीमरुमण्डलमण्डन–परचक्रपराक्रमखण्डन–श्रीविक्रमपुरनगरनिवासिभूत–प्रेत–परेतराज-निर्याजसवासप्रोल्लासपरासनप्रवण–श्रवणसुखहर्षदद्वादशवार्षिकपराश्रुतप्रचारिप्रविहितसु-निहितजनरञ्जननिदान–परिहितसुहितहाटक–प्रकटितविकटनाटक–श्रीमदणहिलपाटक-सततसातिसातिप्रमितपर्वावस्थानविधान–प्र[ति]वादिपञ्चाननसिंहनादमञ्जन प्रदा(धान)–श्री[नि]कर्पसनिकर्पनिष्काषितदारिद्र्यमुद्रामुखि(द्रि)त–श्रीत्रिभुवनगिरिनीवृत्पतिनियमितपञ्च-सतयतिवासस(प्र)वासि–श्रीवामाङ्गजोपरिनवफणिफणाधिरोपणरूप–यामावर्तारात्रिकस्था-पनस्वरूप–प्रमुखनानारूपसारशक्तिसम्भारस्फायमान निरन्तरागच्छद्गच्छप्रपन्नभृत्य-भावभावसारप्रणमन्नानाप्रकारकान्तिभारभासुरसुरासुरव्यन्तरविद्याधरधरेश्वरनिषेवि(वि)त–सदैवतनिर्दैन्य–दानातुरप्रचुरतरनिर्निनादप्रसादनिर्मलनिस्तुलसकलसत्पादकमल प्रभाव–सारस्वतमन्त्रानुभावविभावितारोषनिर्मुग्धशेमुर्षीसमु( [1] )क्रमिराज–स्क(स्वक)गो-त्रक्रमितानन्यजन्य[ नि ]क्रमप्रेङ्खत्प्रोद्भवहल्लहरीपरीतानवगातसमस्तशास्त्रार्थकल्पना[illegible]पिपरिज्ञाना[illegible]जनमानम तारिवकृतरावनोधोद्बुद्धशुद्धबोध-निशितासि[illegible]प्रहारप्रहतादितत[illegible]मिथ्यादर्शनरा[illegible]चितातुल्यकल्यकल्याणकारिहारि निभ[illegible]दर्शनमणि–सारिकशिरोमणि–श्रद्धानिधान–सारिकश्राद्धप्रधान–पुना[illegible]–सर्वजि[illegible]श्रीमदुज्जयन्तोत्तुङ्गशृङ्गगिरिशिखर-[illegible]–सिद्ध–[illegible]–

---

१ '[illegible] ।
[illegible] जिनदत्तसूरि ॥
[illegible] ।

वाचनोत्पुसनोल्लसितयुगप्रधानपदवीनिभ्राजिनिराजिराजहसिकाऽऽसिकाबन्धनिर्बन्धस्थानचरणचङ्क्रमणरमणप्रधानमानस परिहृतपरिग्रहो(हा)ग्रहमात्रातपदूत(?त्यद्भुत)चित्रचारित्रसम्पद्(?)रिर्भगवान् श्री**जिनदत्तसूरि**र्भूरिभव्यनव्यतरश्रद्धालुता[ लता ]वितानतानवोच्छेददक्ष निरपेक्षविवेकविमलजलसेकप्रख्य **गणधरसार्धशतका**भिख्य प्रकरण चिकीर्षु + + + ”

—गणधरसार्धशतकबृहद्वृत्तौ ( प्रारम्भे ) ।

प्रस्तुत**जिनदत्त**सूरिप्रशिष्य**जिनपति**सूरिशिष्येण **सुमतिगणि**ना **जिनदत्तसूरि**-स्वर्गमनादनन्तर चतुरशीतितमे वि स १२९५ वर्षे समर्थिताया **जिनदत्तसूरीयगण**-धरसार्धशतकस्य बृहद्वृत्तावित्थमुदलेखि **जिनदत्तसूरि-चरितम्**—

जन्म दीक्षाऽऽदि

“ अधुना पूर्वाचार्याम्नायप्रतिपादनप्रसङ्गादद्भुतनिधानाना श्री**जिनदत्त**सूराणा मेतत्प्रकरणकाराणा यथाश्रुति [ यथास्मृति ] किञ्चिच्चरितमुच्यते । तथाहि किल पूर्वं श्री**जिनेश्वर**सूरिसत्कश्री**धर्मदेवो**पाध्याय सयताभिर्गीतार्थाभिर्धवलक्कके चतुर्मासी कृताऽऽसीत् । तत्र च क्षपणकभक्त-वाच्छिगश्रावकपत्नी **वाहडदेवी**ति नाम्ना पुत्रसहिता तासा साध्वीना पार्श्वे धर्मं श्रोतु समागच्छति । ता अपि तस्या विशेषेण धर्मकथाऽऽदिक कथयन्ति । पुरुषलक्षण शुभाशुभ च ता गुरूपदेशाद् विदन्ति, तस्या पुत्रस्य प्रधानलक्षणानि पश्यन्ति, तल्लाभनिमित्त च तन्मातर बह्वाक्षिपन्ति । किं बहुना ? तथाऽऽक्षिप्ता यथा [ सा ] कथितकारिणी जाता । ततो भणिताऽऽर्यिकाभिर्धर्मशीले ! एष त्वदीय पुत्रो विशिष्टयुगप्रधानलक्षणधरस्तदेन यद्यस्मद्गुरूणा प्रयच्छसि, तदा तव महान् धर्मो भवति, किञ्चैष समस्तजगन्मुकुटभूतो भवति । तयाऽपि [ तत् ] प्रतिपन्नम् । ततश्चतुर्मास्यनन्तर श्रीधर्मदेवोपाध्यायाना स्वरूप कथित यदस्माभिरत्र पात्र(रत्न)मेक प्राप्तमस्ति, यदि युष्माक प्रतिभास्यति । तत शीघ्र समागता [ श्री ]धर्मदेवोपाध्याया । दृष्टश्चासौ ज्ञात च निश्चित न सामान्यपुरुष एष, किं तर्हि गुरुतरपदयोग्यो भविष्यति । तन्माता पृष्टा ‘ तव सम्मत यद्येष दीक्ष्यते ? ’ । तयोक्त पुण्यपात्रया—‘ भगवन् (न्त) ! प्रसाद कृत्वा कुरुतेव येन ममापि निस्तारो भवति ’ । पुन पृष्टोपाध्यायै —‘ कियद्वर्षप्रमाणोऽयम् ? ’ । तयोक्तम्—‘ एकादशशतद्वात्रिंशत्सवत्सरे ११३२ जात ’ इति । तत एकादशशतैकचत्वारिंशत्सवत्सरे ११४१ शुभलग्ने तस्योपाध्यायैर्दीक्षा प्रदत्ता नाम च कृत **सोमचन्द्र** इति ।

---

१ गणधरसार्धशतके ( गा ७८,१४८ ) द्रष्टव्यम् ।

भणित उपाध्यायै सर्वदेवगणिस्त्वया [ कियद्वर्षाणि ] प्रतिपाल्य एष, सर्वं बहिर्भूमिनयनादिक कार्यमस्य क्रियाकलापश्च शिक्षणीय इति।

बाल्ये प्रतिभा

सूत्रादिपाठस्तेन पूर्वं स्वगृहस्थितेनैव कृतोऽस्ति । 'करेमि भंते ! सामाइय' इत्यादि पाठ्यते । प्रथमव्रतदिन एवासौ सोमचन्द्रमुनिर्नीतोऽस्ति बहिर्भूमौ सर्वदेवगणिना । [ अज्ञानत्वादुद्गतक्षेत्राणि तेन त्रोटितानि । तत शिक्षानिमित्त रजोहरण मुखवस्त्रिका च गृहीता सर्वदेवगणिना ] भणितश्च व्रते गृहीते किं क्षेत्राणि त्रोट्यन्ते ? तद् गच्छ स्वगृहम् । ततस्तदैवोत्पन्नप्रतिभेन तेनोक्तम्–'युक्त कृत गणिना, पर मम चोटिकाऽऽसीत् तां दापय येन गच्छामि' इत्युक्ते गणेराश्चर्यमभूदहो ! लघोरपि कीदृक् सदुत्तरत्वमेतस्य ? किं सम्प्रति प्रतिवचन दीयते ? । एषा वार्ता धर्मदेवोपाध्यायस्याग्रे जाता । धर्मदेवोपाध्यायैश्चिन्तितम्–'भविष्यति योग्य एष'।

सर्वत्र पत्तने परिभ्रम्य लक्षण–पञ्जिकाऽऽदिशास्त्राणि भणितुमारब्ध सोमचन्द्र ।

विद्याध्ययनम्

एव च भावडाचार्य–धर्मशालायां पञ्जिकाभणनार्थमेकदा गच्छन्नुद्धतेन केनापि प्रतिपादितो यथा'ऽहो सितपटा ! कपलिकाग्रहण किमर्थम् ?"। सोमचन्द्रेणोक्तम्—" त्वदीयमुखचूरणार्थमात्मीयमुखमण्डनार्थं च "। गतोऽसौ निरुत्तरो न किमपि वक्तु शकितः।

भणनस्थाने गतस्तत्रानेकेऽधिकारिपुत्रा पञ्जिका भणन्ति । कदाचित् तेनाचार्येण परीक्षार्थं पृष्ट –'भो सोमचन्द्र ! न विद्यते वकारो यत्र स नवकार इति यथार्थं नाम ?' । प्रतिभावता प्रोक्त झटिति सोमचन्द्रेण–"भैवमानेदयन्त्वाचार्या, किं तर्हि नवकरण नवकार इति व्युत्पत्ति कार्या " । आचार्येण ज्ञातम्–' अहो ! अयत्त सदुत्तर एष, अनेन सह वक्तु न शक्यते'।

अन्यदा लोचदिने व्याख्यानभणनाय न गत । व्याख्याने व्यवस्था चेदृशी यद्येकोऽपि छात्रो नागच्छति, तदा व्याख्यान न भणत्याचार्य इति । ततो व्याख्यानमभणत्याचार्ये सर्वैर्भणितमधिकारिपुत्रै –'आचार्यमिश्रा ! सोमचन्द्रस्य स्थाने एष पाषाणो धृतो भणत यूय व्याख्यानम्'। ततस्तदुपरोधेन भणित व्याख्यानम्। द्वितीयदिने समागत सोमचन्द्र पप्रच्छ छात्रान्–'व्यतीतेऽह्नि किं मां विना भणित गुरुभि ?'।

---

१ 'अद्यापि यस्य वपुरेष्य' [illegible] [illegible] विद्या ।

—प्रभावकचरित्र ( श्लो ८० ) [illegible] ।

तैरुक्तम्–‘ त्वदीयस्थाने पाषाणो धृत ’। सोमचन्द्रेणोक्तम्–“ कश्चित् पाषाण कश्चिन्नेत्यधुनैव ज्ञास्यते, यावती च पञ्जिका भणिता, तावतीं मां पृच्छन्त्वेतानपि, यथार्थं यो न व्याख्यास्यति स एव पाषाण ”। आचार्येणोक्तम्–‘ भो सोमचन्द्र ! त्वां प्रज्ञाऽऽदिसौरभगुणाढ्य कस्तूरिकां जानाम्येव, परमेतैर्मूर्खैं प्रेरितोऽह व्याख्यानेऽत क्षन्तव्य भवता । एव पञ्जिका स पपाठ ।

अशोकचन्द्राचार्येणोपस्थापना कृता । हरिसिंहाचार्येण सर्वसिद्धान्तवाचना दत्ता पण्डितसोमचन्द्राय तथा मन्त्रपुस्तिका । यया सिद्धान्तवाचना स्वय गृहीता सा कपलिका च भगवता तुष्टेन दत्ता । तथा देवभद्राचार्येणापि तुष्टेन काष्ठोत्किरण दत्तम्, येन महावीरचरित–पार्श्वचरितादीनि चत्वारि कथाशास्त्राणि पट्टिकायां लिखितानि । एव च पण्डितसोमचन्द्रगणिर्ज्ञानी[ ध्यानी ]सैद्धान्तिक सर्वजनमनोहारी श्रावकाणामानन्दकारी साध्वाचारेण ग्रामानुग्राम विहरति ।

जिनवल्लभसूरि–पदे प्रतिष्ठा

इतश्च [ श्रीदेवभद्राचार्यैं श्रुत जिनवल्लभसूरीणा देवलोकगमनम्। चिन्ता समुत्पन्नाऽतीव चित्तसन्तापो जातोऽहो ! सुगुरूणा पदमुद्योतितमभूत, पर विघटितम् । पश्चाद् ]देवभद्राचार्याणामीदृश चित्त जात यदि श्रीजिनवल्लभसूरि–युगप्रधानपद योग्यपदस्थापनेन नोद्ध्रियते, तदा का भक्ति [1] । ततश्चिन्तितमाचार्यैरस्मिन् गच्छे कस्तत्पदयोग्य इति चिन्तयता चित्ते पण्डितसोमचन्द्रगणिर्लग्न । निश्चितमेष एव योग्य श्रावकाणां ज्ञान–ध्यान–क्रियापरत्वेनानन्दकारी । पश्चात् सर्वसम्मते पण्डितसोमचन्द्राय लेख प्रदत्तो यत् त्वया चित्रकूटे

---

१ गणधरसार्धशतके ( गा ७७,७९,८१–८४,१४८ ) द्रष्टव्यम् । अशोकचन्द्राचार्यस्य शिष्येणोदयचन्द्रगणिना वि॰ स॰ ११५४ वर्षे लेखित ताडपत्रीयमोघनिर्युक्तिसूत्र विद्यतेऽद्यापि पत्तनीयजैनभाण्डागारे । तत्रस्थश्चायमुल्लेख —

“ सवत् ११५४ वर्षे वैशाखशुक्लप्रतिपदाया रविदिने श्रीअशोकचन्द्राचार्यशिष्येण उदयचन्द्रगणिना जिनभद्रलेखकहस्ताद् विमलचन्द्रगणिहस्ताच्च ओघनिर्युक्तिसूत्र लखित ॥ ” P P ५,२९

अनेनैवाशोकचन्द्राचार्येण प्रसन्नचन्द्र–हरिसिंह–देवभद्रादय सूरिपदे प्रतिष्ठिता आसन् । य मध्याद् देवभद्रसूरिर्जिनवल्लभ–जिनदत्तयो सूरिपदप्रदाता बभूव । यदुक्तम्—‘ तेभ्य श्रीदेवभद्रसूरिभ्य सूरिपद आचार्यपद दत्त वितीर्ण कैरित्याह–अशोकचन्द्रसूरिभि श्रीजिनचन्द्रसूरिप्रसादीकृताचार्यपदे । तथा चैभिरेव प्रकरणकारिप्रभुभिर्विंशिकायामभ्यधायि यथा—

“ अभिनवधवरसहोदरसद्देवगणेस्तनोऽभवच्छिष्य । सूरिस्त्वशोकचन्द्रो जिनचन्द्राचार्यप्राप्तपद ॥”

उक्त च तत्रैव तैरेव यथा—

भणित उपाध्यायै सर्वदेवगणिस्त्वया [ कियद्वर्षाणि ] प्रतिपाल्य एष, सर्वं बहिर्भूमिनयनादिकं कार्यमस्य क्रियाकलापश्च शिक्षणीय इति।

बाल्ये प्रतिभा

सूत्रादिपाठस्तेन पूर्वं स्वगृहस्थितेनैव कृतोऽस्ति। 'करेमि भंते! सामाइय' इत्यादि पाठ्यते। प्रथमव्रतदिन एवासौ सोमचन्द्रमुनिर्नीतोऽस्ति बहिर्भूमौ सर्वदेवगणिना। [ अज्ञानत्वादुद्गतक्षेत्राणि तेन त्रोटितानि। तत शिक्षानिमित्त रजोहरण मुखवस्त्रिका च गृहीता सर्वदेवगणिना ] भणितश्च व्रते गृहीते किं क्षेत्राणि त्रोट्यन्ते? तद् गच्छ स्वगृहम्। ततस्तदैवोत्पन्नप्रतिभेन तेनोक्तम्-'युक्त कृत गणिना, पर मम चोटिकाऽऽसीत् तां दापय येन गच्छामि' इत्युक्ते गणेराश्चर्यमभूदहो! लघोरपि कीदृक् सदुत्तरत्वमेतस्य? किं सम्प्रति प्रतिवचन दीयते?। एषा वार्ता धर्मदेवोपाध्यायस्याग्रे जाता। धर्मदेवोपाध्यायैश्चिन्तितम्-'भविष्यति योग्य एष'।

सर्वत्र पत्तने परिभ्रम्य लक्षण-पञ्जिकाऽऽदिशास्त्राणि भणितुमारब्ध सोमचन्द्र।

विद्याध्ययनम्

एव च भावडाचार्य-धर्मशालायां पञ्जिकाभणनार्थमेकदा गच्छलुन्द्दलेन केनापि प्रतिपादितो यथा'ऽहो सितपटा! कपलिकाग्रहण किमर्थम्?'। सोमचन्द्रेणोक्तम्—"त्वदीयमुखचूर्णनार्थमात्मीयमुखमण्डनार्थं च"। गतोऽसौ निरुत्तरो न किमपि वक्तु शकितः।

भणनस्थाने गतस्तत्रानेकेऽधिकारिपुत्रा पञ्जिका भणन्ति। कदाचित् तेनाचार्येण परीक्षार्थं पृष्ट—'भो सोमचन्द्र! न विद्यते वकारो यत्र स नवकार इति यथार्थ नाम?'। प्रतिभावता प्रोक्त झटिति सोमचन्द्रेण—"नैवमाचार्यदन्त्वाचार्या, किं तर्हि नवकरण नवकार इति व्युत्पत्ति कार्या"। आचार्येण ज्ञातम्—'अहो! अत्यन्त सदुत्तर एष, अनेन सह वक्तु न शक्यते'।

अन्यदा लोचदिने व्याख्यानभणनाय न गत। व्याख्याने व्यवस्था चेदृशी यद्येकोऽपि छात्रो नागच्छति, तदा व्याख्यान न भणत्याचार्य इति। ततो व्याख्यानमभणत्याचार्ये सगर्वैर्भणितमधिकारिपुत्रैः—'आचार्यमिश्रा! सोमचन्द्रस्य स्थाने एष पाषाणो धृतो भणत यूय व्याख्यानम्'। ततस्तदुपरोधेन भणित व्याख्यानम्। द्वितीयदिने समागत सोमचन्द्र पप्रच्छ छात्रान्—'व्यतीतेऽह्नि किं मां विना भणित युष्माभि?'।

---

१ 'अदर्शि दम्भ [illegible] [illegible]-[illegible] [illegible] [illegible] पृथमना [illegible]।

—[illegible] ( [illegible] ८० ) [illegible]।

तैरुक्तम्–' त्वदीयस्थाने पाषाणो भृत '। सोमचन्द्रेणोक्तम्–" कश्चित् पाषाण' कश्चिने-त्यवुनैव ज्ञास्यते, यावती च पञ्जिका भणिता, तावतीं मां पृच्छन्त्वेतानपि, यथार्थं यो न व्याख्यास्यति स एव पाषाण "। आचार्यणोक्तम्–' भो सोमचन्द्र ! त्वां प्रज्ञाऽऽदि-सौरभगुणाढ्य कस्तूरिकां जानाम्येव, परमेतैर्मूर्खै प्रेरितोऽहं व्याख्यानेऽत्र क्षन्तव्य भवता । एवं पञ्जिकां स पपाठ ।

अशोकचन्द्राचार्यणोपस्थापना कृता । हरिसिंहाचार्यण सर्वसिद्धान्तवाचना दत्ता पण्डितसोमचन्द्राय तथा मन्त्रपुस्तिका । यया सिद्धान्तवाचना स्वयं गृहीता सा कपटिका च भगवता तुष्टेन दत्ता । तथा देवभद्राचार्यणापि तुष्टेन काष्ठोत्किरण दत्तम्, येन महावीरचरित–पार्श्वचरितादीनि चत्वारि कथाशास्त्राणि पट्टिकायां उत्किरितानि । एवं च पण्डितसोमचन्द्रगणिर्ज्ञानी[ ध्यानी ]सैद्धान्तिक सर्वजनमनोहारी श्रावकाणामानन्दकारी साध्वाचारेण ग्रामानुग्राम विहरति ।

जिनवल्लभसूरि-पदे प्रतिष्ठा

इतश्च [ श्रीदेवभद्राचार्यै श्रुतं जिनवल्लभसूरीणां देवलोकगमनम्। चिन्ता समुत्पन्नाऽतीव चित्तसन्तापो जातोऽहो ! गुरुगुरूणां पदमुद्योतितमभूत, पर विघटितम् । पश्चाद् ]देवभद्राचार्याणामीदृश चित्त जात यदि श्रीजिनवल्लभसूरि–युगप्रधानपद योग्यपदस्थापनेन नोद्धियते, तदा का भक्ति ? । ततश्चिन्तितमाचार्यैरस्मिन् गच्छे कस्तत्पदयोग्य इति चिन्तयतां चित्ते पण्डितसोमचन्द्रगणिर्लग्न । निश्चितमेष एव योग्य श्रावकाणां ज्ञान-ध्यान-क्रियापरत्वे-नानन्दकारी । पश्चात् सर्वसम्मते पण्डितसोमचन्द्राय लेख प्रदत्तो यत् त्वया चित्रकूटे

---

१ गणधरसार्धशतके (गा ७७,७९,८१–८४,१४८) द्रष्टव्यम् । अशोकचन्द्राचार्यस्य शिष्येणोदयचन्द्रगणिना वि० स० ११५४ वर्षे लिखित ताडपत्रीयमोघनिर्युक्तिसूत्र मिदोऽद्यापि पत्तनीयजैनभाण्डागारे । तत्रत्यप्रशस्तिवाक्यमिदम् —

" संवत ११५४ वर्षे वैशाखशुक्लप्रतिपदायां रविदिने श्रीमदशोकचन्द्राचार्यशिष्येण उदयचन्द्रगणिना जिनभद्रदेवगणिहस्ताद विमलचन्द्रगणिहस्ताच्च ओघनिर्युक्तिसूत्र लिखित ॥ " P P ५,३९

अनेनैवाशोकचन्द्राचार्येण प्रसन्नचन्द्र–हरिसिंह–देवभद्रादय सूरिपदे प्रतिष्ठिता आसन् । एतस्माद् देवभद्रसूरिर्जिनवल्लभ–जिनदत्तयो सूरिपदप्रदाता बभूव । यदुक्तम्— ' तस्य श्रीदेवभद्रसूरिभ्य सूरिपदं आचार्यपद दत्त विज्ञाय वैरित्याद–प्रसन्नचन्द्रसूरिभि श्रीजिनचन्द्रसूरिप्रभावीरनाचार्यपदे । तथा चैभिरेव प्रकरणकारप्रभुभिर्विहितायामन्यत्रापि यथा—

" अभिनवभरतोदरसद्देवगणेभ्योऽभवच्छिष्य । सूरिरत्नपशोकचन्द्रो जिनचन्द्राचार्यप्रसादः ॥"

उक्तं च तत्रैव तैरेव यथा—

शीघ्र समागतव्यम्, येन श्रीजिनवल्लभसूरिपदप्रतिष्ठायामपि नागतोऽभू । बहवश्च तत्पदे स्थातु, लम्बकर्णा गौरवर्णा, श्रीपर्णपर्णाक्षा साक्षादिव मकरध्वजा गूर्जरत्रासञ्जाता सयता अभ्युद्यता आसन्, पर योग्यता गुरव एव विदति किं बहुना ? । देवभद्राचार्या पण्डितसोमचन्द्रोऽन्येऽपि साधवश्चित्रकूटे समाजग्मु । सर्वोऽपि लोको वेत्ति सामान्येन श्रीजिनवल्लभसूरिपदे सूरिपदस्थापन भविष्यति, न ज्ञायते कश्चिदुपवेक्ष्यति । श्रीजिनवल्लभसूरिप्रतिष्ठिते साधारणसाधुकारिते श्रीमहावीरचैत्ये पदस्थापन भविष्यति । तत स्वपरिभावितलग्नदिनादर्वाग्दिने श्रीदेवभद्राचार्यैरेकान्ते भणित पण्डितसोमचन्द्रगणिर्यदुतास्मिन् दिने युष्मदीय पदस्थापनालग्न परिभावितमस्ति । प० सोमचन्द्रेणोक्तम्—'युष्माक सग(म)त तद् युक्तम्, पर यद्यस्मिँल्लग्ने स्थापयिष्यथ तदा न चिराय जीवित भविष्यति । षण्णा दिनानामुपरि शनैश्चरवा[स]रे यल्लग्न भविष्यति तत्रोपविष्टाना त्वस्माक चतुर्दिक्षु विहरता चतुर्विध श्रीश्रमणसङ्घ श्रीजिनवल्लभसूरिवचने प्रभूतो भविष्यति चिरञ्जीवित च'[1] । श्रीदेवभद्राचार्यैरुक्तम् 'एतदेव वयमपि गवेषयामहे, तदपि लग्न न दूरे, तत्रैव भवतु' । ततस्तस्मिन्नेव दिने श्रीजिनवल्लभसूरि[पदे विस्तरे]ण सन्ध्यासमये लग्नवेलाया सस्थापिता श्रीजिनदत्तसूरिनामानो युगप्रवरास्ततो वादित्रैर्वाद्यमानै समागता वसतौ । प्रतिक्रमणानन्तर वन्दनक दत्त्वा श्रीदेवभद्रसूरिभिर्भणितम्—'देशना कुरुत' । तत सिद्धान्तोक्तोदाहरणानुसारिहारिसुधासारणिकरणिगीर्गोणवाणीप्रबन्धेन तथा कृता पूज्यै श्रीजिनदत्तसूरिभिर्देशना यथा 'ह्रस्वशरीर श्यामवर्णोऽय किमित्युप[वेश्यते ?[2] किं न सन्त्यन्ये गौरवर्णा लम्बकर्णा विशाललोचना गच्छमध्ये साधव ?' इत्यादि कालुष्यमपहाय सर्वा प्रजा रञ्जिता सती भणति—'अहो ! सिंहा]नां पदे सिंह एवोपविष्टो विराजते । धन्या श्रीदेवभद्राचार्या यैरीदृश पात्ररत्न परीक्षितम्, किमस्मादृशा स्थूलमतयोऽन्तर्लक्षणानि जानन्ति ?' ।

---

' सूरि प्रसन्नचन्द्रो हरिसिंहो देवभद्रसूरिरपि ।
सर्वेऽप्येत विहिता सूरिपदऽनोकचन्द्रेण ॥ "
—गणधरसार्धशतक (गा ८४) बृहद्वृत्तौ सुमतिगणि ।

१ 'तथा च विंशिकायामप्युक्तम्—
[illegible] ॥ १ ॥
[illegible] ॥ २ ॥
[illegible] ॥ ३ ॥'
—ग सा श (गा ८४) बृहद्वृत्तौ सुमतिगणि ।

२ [illegible]
३ [illegible]

अयस्मिन् दिने विज्ञता श्रीजिनदत्तसूरय श्रीदेवभद्राचार्यैर्यत् कतिपयदिनानन्तर कतिचिद् दिनानि श्रीपत्तनाद् वहिर्विहर्तव्यम्। श्रीजिनदत्तसूरिभिरुक्तम्–'एव विधास्याम'। अपरदिने जिनशिखरेण साधुविषये किञ्चित् कलहादिकमयुक्त कृतम् । ततो

औदार्यम्

देवभद्राचार्यैर्गलके गृहीत्वा निष्कासित । ततो यत्र श्रीजिनदत्तसूरयो वहिर्गच्छन्ति, तत्र गत्वा स्थित । तत्र गताना पूज्याना पादयोर्लगित्वा दीनवागवादीत्–' प्रभो ! मदीयोऽयमन्याय एकवार क्षन्तव्य , न पुन करिष्यामि ' । तत कृपोदधय श्रीजिनदत्तसूरयस्त प्रवेशयामासु । पश्चाद् देवभद्राचार्यैरुक्तम्–– 'युष्माभिर्न युक्त कृतम्, एष दुरात्मा न भवता सुखावहो भविष्यति । पामनोष्ट्रस्येवैतस्य वहिर्निष्कासनमेव श्रेय '। पूज्यैरुक्तम्––" श्रीजिनवल्लभसूरिपृष्ठे लग्नोऽय यावदनुवर्तयितु शक्यते तावदनुवर्त्यते " । श्रीदेवभद्राचार्यादयोऽन्यत्र विहार चक्रु, कालेन स्व पद सम्प्रापुरिति ।

मरुस्थलादिषु विचरणम्

[ श्रीजिनदत्तसरिभिरपि श्रीपत्तनाद् विजिहीर्षुभि श्रीदेव–गुरुस्मरणार्थमुपवासत्रय चक्रे । ततो देवलोकात् श्रीहरिसिंहाचार्य आगत ' किमर्थं स्मृतोऽहम् ? ' इत्युवाच । ] श्रीजिनदत्तसरिभिरुक्तम्–' कुत्र विहराम?इति हेतुना ' ततो ' मरुस्थलादिषु विहर्तव्यम् ' इत्युपदेश दत्त्वा गतोऽदर्शन श्रीहरिसिंहाचार्य । यावत् तत्रैव तिष्ठन्ति पूज्या लब्धोपदेशास्तावन्मरुस्थली वास्तव्या मेहर–भोस्व(प)र–वासल–भरतादय श्रावका व्यवहारेण तत्र सम्प्राप्ता । तत श्रीजिनदत्तसूरिगुरु दृष्ट्वा वचन च श्रुत्वाऽतीव तुष्टा श्रीजिनदत्तसूरीन् गुरुत्वेन प्रतिपन्ना । भरत सुगुरुपार्श्वे वाचकत्वेन स्थित, अन्ये तु मेहर–भोस्व(प)रादय स्वस्थाने गता स्वकुटुम्बाग्रत. प्रभुवर्णन कुर्वन्ति–' एवविधा शुद्धचारित्रिण श्रीजिनदत्तसूरय ' इत्यादि । एव तत्र देशे प्रवेशो जात ।

नागपुरे सवाद

ततो नागपुरे विहृता । तत्र श्रावकधनदेव श्रेष्ठी प्रतिपत्तिं करोति । [ श्रुत्वाऽऽयतनानायतनादिविचार भणित धनदेवेन–' भो आचार्य ! यदि मद्भणित करोषि, तदा सर्वोऽपि श्रावकवर्गस्त्वत्पृष्ठलग्न परिवारभूतो भवति । ' ] पूज्यै किलाजानानैरिवाभिहितम्—" धनदेवश्रेष्ठिन् ! किं तत् ? " धनदेव उवाच–

" आयतनमनायतन विधिमविधिं चैव सर्वविषयेऽपि ।
नो चेत् कथयसि लगयामि मेदिनीं तव(तदा) पृष्ठे ॥ "

तदाकर्ण्योक्त श्रीपूज्यै —

" धनदेव ! तावकीन वचन कुर्मोऽथवा नु तीर्थकृताम् ? ।
यदनायतन सूत्रे भाणित तद् ब्रूमहे नियतम् ॥ १ ॥
उत्सूत्रभाषणात् पुनरनन्तससार[ कार ]णाद् बहुश ।
किं लोकेन त्वग्रोगिणो भवेत् प्रचुरो मक्षिकासङ्ग ॥ २ ॥
किञ्च–मैव मस्था बहुपरिकरो जनो जगति पूज्यता याति ।
येन [ बहु ]तनययुक्ताऽपि शूकरी गूथमश्नाति ॥ ३ ॥ "

तद् वचनमतीव कर्णकटुक दु खदमभूद् धनदेवस्य । भवतु, तथापि गुरुणा युक्तमेव वक्तव्यम् । यत —

" रूसउ वा परो मा वा विस वा परियत्तउ ।
भासियव्वा हिया भासा सपक्खगुणकारिया ॥ "[1]

इति सिद्धान्तप्रामाण्यात् केषाञ्चिद् विवेकिना [ पुन ]स्तद् वचन रुचितम् ।

**अजयमेरौ देवगृहादि, अर्णोराज-समागम**

ततो नागपुरादजयमेरौ विहृता । तत्र च ठ० आसधर–साधु (साधारण)–रासलप्रभृतिश्रावका सन्ति । श्रीजिनदत्तसूरयो देववन्दनार्थं वाहडदेवगृहे गच्छन्ति । अन्यदा तत्राद्य आचार्य आगत. ।, स च पर्यायेण लघुरपि चैत्ये देववन्दनार्थं गताना गुरूणां व्यवहार नाकरोत् । तत: ठक्कुराशाधरप्रभृतिश्रावकैरुक्तम्–' किमत्र गच्छतां फलम् ?, यदि युक्त न प्रवर्तते ' । ततो वन्दनादिव्यवहारो निवृत्त । तत श्रावकैर्विज्ञप्तोऽर्णोराज —' देवास्माक श्रीजिनदत्तसूरयो गुरव समागता सन्ति ' । राज्ञोक्तम्–" भद्रम, यथाऽऽगता कार्यं कथयत " । श्रावकैरुक्तम्–' देव ! भूमिखण्डमेकमवलोक्यते, यत्र देवगृहादिधर्मस्थानानि श्रावकाणां स्वकुटुम्बसदनानि च सम्पाद्यन्ते ' । पश्चादर्णोराजेनोक्तम्—" दक्षिणदिग्भागे य पर्वतस्तस्मिन् स्थ(भूत)ले यद् देवगृहादिक रोचते, तत्र शङ्का कुरत, आत्मीयगुरवश्च मम दर्शनीया " । एतत् स्वरूप प्रभूणामग्रे श्रावका अचाकथन् । प्रभुभि परिभाव्य भाषितम्–" भो ! य एवमस्मद्दर्शनोत्कण्ठितो नरेन्द्रस्तस्मिन्नाकारिते गुण एव स्यात् " । ततो गुरुवचनमनुसृत्य द्वित्रि श्रावकैरभ्यवसरे समाहूतोऽर्णोराज आगत । क्षिप्रवेग नमस्कृता श्रीजिनदत्तसूरय । अभिनन्दित आशीर्वादेन प्रभुभि । तथा चाशीर्वाद —

" श्रिय[ श्रिय ]गिनिर्माण–स्थिति–प्रलयहेतव ।
सन्तु राजेन्द्र ! भूयै ते सर्व आरति शङ्कर ॥ १ ॥

[1] रूष्यतु वा परो मा वा विषं वा परिवर्तताम् । भाषितव्या हिता भाषा स्वपक्षगुणकारिका ॥

तथा—नीतिश्चित्ते वसति नितरां लब्धविश्रान्तिरुच्चै
श्रीरस्याङ्के भुजयुगलमप्याश्रिता विक्रमश्री ।
एषोऽप्यर्थं क्षिपति बहुभिर्लोकवाक्यैः प्रियो मा-
मित्यर्णोराड् ! भ्रमति भुवनं कीर्तिरस्ताश्रया ते ॥ ” इत्यादि ।

सद्गुरुमुखकमलविनिर्गतभारतीमाकर्ण्य तुष्टो राजा बभाषे—‘ सदेवात्र तिष्ठन्तु सुगुरवः ’ । गुरुभिरुक्तम्—“ युक्तमुक्तं महाराजेन परमस्मदीया स्थितिरेषा यत् सर्वत्र विहारक्रमः क्रियते लोकोपकाराय । अत्र पुनः पुनरागमिष्यामो यथा युष्माकं समाधानं भविष्यति तथा विधास्यामः ’ । ततः समाधानेनोत्थितो राजा ।

ततः ठक्कुर आशाधरो भणितः पूज्यैर्यथा—
“ इदमन्तरमुपकृतये प्रकृतिचला यावदस्ति सम्पदियम् ।
विपदि नियतोदयायां पुनरुपकर्तुं कुतोऽवसरः ? ॥ ”

अतः स्तम्भनक-शत्रुञ्जयोज्जयन्तकल्पनया पार्श्वनाथ-ऋषभनाथ-नेमिनाथबिम्ब-स्थानानि परिभावनीयानि । उपर्यम्बिकादेवकुलिका तले च गणधरादिस्थानं चिन्तनीयम् ” । इत्यभिधाय श्रीपूज्यैर्वाग्ग( ग्ज )डदेशे सुशकुनेन कृतो विहारः ॥

वाग्जडदेशे विहार

तत्रत्यलोकाश्च [ श्रीजिनवल्लभसूरिविषये प्रागेव समाहितचेतसोऽभूवन्, तन्नामग्रहणेऽपि नमनशीलास्तेषां देवलोकगमनवार्तामाकर्ण्य तेषां पदे ये संस्थापितास्ते 'ज्ञान-ध्यानगुणोपेता ] श्रीमहावीरवदनारविन्दविनिर्गतार्थं श्रीसुधर्मस्वामिगणधरराचितसिद्धान्तवेदिनः श्रीजिनदत्तसूरिनामानः सुगुरवो युगप्रधानास्तीर्थंकरकल्पा अत्रास्मद्देशे विहृताः सन्ति ’ इति चोपश्रुत्य हृष्टा दर्शनोत्काण्ठता स्तत्पादाम्भोजवन्दनार्थमायाताः । ततः श्रीपूज्यदेशनां श्रुत्वा दृष्ट्वा च सौम्यतामत्यन्तमानन्दिताः सञ्जाताः । यद् यत् ते श्रावकाः पृच्छन्ति, तत् तत् कथयन्तः केवलिन इव श्रीजिनदत्तसूरयस्तेषां मनःसमाधानमुत्पादयन्ति । केचन सम्यक्त्वं केचन देशविरतिं केचन सर्वविरतिं तुष्टाः सन्तस्ते गृह्णन्ति । एवं च पूज्यैस्तत्र व्रतिनो बहवः कृताः व्रतिन्यश्च तस्मिन् प्रस्तावे द्विपञ्चाशत् कृताः श्रूयन्ते । तस्मिन्नेव प्रस्तावे जिनशेखरमुपाध्यायं कृत्वा कतिचित्साधुसहितं रुद्रपल्ल्यां विहारक्रमेण प्रेषयाञ्चक्रुः । स च तपः करोति, स्वजनास्तत्र सन्तीति तेषां समाधानहेतोः ।

जयदेवाचार्यस्य सम्प्राप्ति

तथेदं स्वरूपं जयदेवाचार्यैः स्वस्थानस्थितैः श्रुतं यत्—‘श्रीजिनवल्लभसूरिपदे [प्रतिष्ठिता ] श्रीजिनदत्तसूरयः सर्वगुणोपेता अत्र देशे विहारेणायाताः ’ इति । ततश्चिन्तितं तैः—‘शोभनं सञ्जातं श्रीजिनवल्लभगणेश्चैत्यवासपरिहारेण श्रीअभयदेवसूरिपार्श्वे वसतिवासप्रतिपत्तिं कृतां श्रुत्वा प्रागेवास्माकं वसतिवासाभिप्राय उत्पन्न आसीद्, इदानीं गत्वा दृश्यन्ते ते

सुगुरव ' । ततस्ते सपरिवारा वन्दनार्थं समागता [ वन्दिता ] सविनय श्रीजिनदत्त सूरय । तैश्च तथा सम्भाषिता सिद्धान्तमधुरवचनैर्यथैव परिणामोऽभूद् यदुत— ' एत एव भवे भवेऽस्माक गुरवो भूयासु ' । पश्चाद् मन्यदिने उपसम्पद गृहीतवत श्रीजयदेवाचार्यो पश्चान्नावलोकित सनत्कुमारचक्रवर्तिवत् ।

जिनप्रभाचार्यस्य चैत्यवासत्याग

तथा श्रीजिनप्रभाचार्या केवलिकापरिज्ञानेन सर्वजनप्रसिद्धास्ते च तुरुष्क [ भूम्या गता केनचित् ] नायकेन ज्ञानिनो ज्ञात्वा पृष्टा यथा—' मदीयहस्ते किमस्ति ? ' । आचार्यैर्गणयित्वा कथितम्—' वदाम , खटिका खण्ड वालश्च ' । स च वाल न जानाति, ततस्तेन विस्मितेन दर्शितो हस्तो यावद् वालोऽपि खटिकाया लग्नोऽस्ति । तुरुष्काधिपस्तुष्ट आचार्यहस्त गृहीत्वा चुम्बितवान्, ' चगा चगा ' इत्युक्तवाश्च । आचार्येण ज्ञातम्—' एष मामात्मना सह नेष्यति । दुष्टाभिसन्धयश्चैते कदाचिदनर्थमपि कञ्चन मम सम्पादयिष्यति ' इति रात्रौ प्रपलाय्य स्वदेशे गत । तत्रागतो जयदेवाचार्य वसतिमार्गप्रतिपत्तार श्रीजिनदत्तसूरिपार्श्वे श्रुत्वा तस्याप्यभिप्राय उत्पन्नोऽहमपि चैत्यवास परित्यजामि, परम तीव्र गाढो मार्ग एतेषा श्रूयते । ' यदि कश्चित् सुकुमारतरो धर्ममार्ग स्याद् ' इति केवलिकापरिज्ञानेन चिन्तयति यावत् प्रथमवेलाया श्रीजिनदत्तसूरय इति नामागतम् । ततश्चिन्तितम्—' मा कथञ्चिदङ्कव्यत्ययो जातो भविष्यति ' द्वितीयवेलाया गणयति यावत् तथैव श्रीजिनदत्तसूरय इति नामागच्छति । पुनर्निश्चयाय यावत् तृतीयवेला यामपि गणयितुमारब्ध, ततोऽग्निपुञ्जो गगनात् पतित आकाशे वाणी चोत्थिता— " यदि शुद्धमार्गेण तव प्रयोजनम्, तत् किमिति बहुधा गण [यसि ? । अ] यमेव ससारनिस्तारक शुद्धमार्गप्ररूपक सुगुरु " इति । ततोऽसौ नि सन्देह सन् श्रीजिनदत्तसूरिपार्श्वे समागत । ततो ज्ञानादित्येन भणित —' तव चूडामणिपरिज्ञानमस्म समीपे न परिस्फुरिष्यति ' । तेनोक्तम्—' मा स्फुरतु, मम विधिमार्गेण प्रयोजनम् ' इत्युक्ते दत्ता तस्य स्वकीयोपसम्पत्ति । तत सु(स)गुर्वाज्ञया विजहार ।

विशिष्ट शिष्यादि परिवार

तथा तत्रैव स्थितानां श्रीजिनदत्तसूरीणामतिशयज्ञानिना पार्श्वे विमलचन्द्रगणिर्नाम चैत्यवासी जयदेवाचार्य—जिनप्रभाचार्ययोर्व्रतनिवास प्रति [ पार्श्वे श्रुत्वा वसति ] मार्गमङ्गीचकार । तथा तस्मिन्नेव प्रस्तावे जिनरक्षित—शीलभद्रौ मात्रा सह प्रव्रजितौ, तथा स्थिरचन्द्र—वरदत्तनामानौ भ्रातरौ प्रव्रजितौ ।

तथा जयदत्तनामा मुनिर्मन्त्रवादी बभूव । तस्य च पूर्वजा मन्त्रशक्तियुक्ता आसन् । स च सोऽपि रुष्टया दुर्नामितदुष्टदेवतया विनाशिता । एवं पुनरपि

श्रीजिनदत्तसूरीणा शरण गतो व्रत जग्राह । तत श्रीपूज्यै शक्तिनिधानै करुणानिधानैर्दुष्टदेवतातो रक्षित ।

तथा **गुण**चन्द्रगणिर्नाम यति सोऽपि **जिनदत्तसूरिभिर्दीक्षित** । स हि पूर्वं श्रावक सन् तुरुष्कैर्हस्तदर्शनेन ' चङ्गो भाण्डागारिको भविष्यति ' इति ज्ञात्वा नाशनभयाच्छृङ्खलया दृढ निबद्ध । तेन च भावनया नमस्कारलक्ष गुणितम् । तत्प्रभावाच्छृङ्खला स्वयमेव त्रुटिता । ततोऽलक्षितो नि सृत्य रजनीपश्चिमार्धे कस्याश्चिद् वृद्धाया गृहे प्रविष्ट । तया च कृपया कोष्ठिकामध्ये प्रक्षिप्त । तुरुष्कै प्रेक्षितो न लब्ध, ततो रात्रौ निर्गत्य स्वदेशे गत । एव च तेन जातसवेगेन प्रभूणा पार्श्वे-वृत्त( व्रत ) गृहीतमिति ।

तथा **रामच**न्द्रगणि**र्जी**वानन्दपुत्रसहितोऽन्यगच्छाद् भव्य धर्मं ज्ञात्वा श्री**जिन**-दत्तसूरीणामाज्ञा प्रतिपन्न । तथा ब्रह्मचन्द्रगणिर्व्रतमाददे ।

एतेषा मध्या**ज्जिन**रक्षित—शीलभद्र—**स्थिर**चन्द्र—वरदत्तप्रभृतिसाधवस्तथा **श्री**मति—**जिन**मति—**पूर्ण**श्रीप्रभृतय साध्व्यश्च वृत्ति—पञ्जिका—टीकाऽऽदिलक्षणशास्त्रभणनार्थं श्री**धा**राया प्रेषिता । तैश्च तत् सर्वं भणित भक्तिमन्महर्द्धिकश्रावकसाहाय्येन ।

रुद्रपल्ल्या विहार

आत्मना श्रीजिनदत्तसूरयो रुद्रपल्ल्या विहृता । तत्र च पथि गच्छतामेकस्मिन् ग्रामे श्रावक एक प्रतिदिन व्यन्तरेण प्रचण्डेन पीड्यते । तस्य च पुण्येन श्रीजिनदत्तसूरयस्तत्रैव ग्रामे उत्तीर्णा । तेन श्रावकेण विज्ञप्त शरीरस्वरूपम् । परिभावित श्रीपूज्यैर्यदुत–' एष मन्त्र-तन्त्राणामसाध्यो व्यन्तर । ततो *गणधरसप्ततिका* कृत्वा टिप्पनके लेखयित्वा तस्य व्यन्तरगृहीतस्य श्रावकस्य हस्ते टिप्पनक दत्तम्, भणितश्च दृष्टिश्चात्र निवेशनीया । तेन च तथा कृत यावदसौ व्यन्तरो गाढतर पीडया समागत खट्वासीमाम्, शरीरे न सङ्क्रान्तो **गणधरसप्ततिका**हृदयनिवेशनदर्शनप्रभावात् । द्वितीयदिने द्वारसीमा यावत् समागत । तृतीयदिने त्वागत एव न । श्रावकस्तु सुस्थो जात, किं बहुना ? ।

रुद्रपल्ल्या सम्प्राप्ता । जिनशेखरोपाध्याया श्रावकै सहिता सम्मुखमागता, विस्तरेण मध्ये प्रविष्टा । विंशोत्तर शत कुटुम्बानां तत्र श्रीजिनवल्लभसूरिवचनव्यव-

---

१ जेसलमेरुदुर्गीयचिन्तामणिपार्श्वजिनालयान्तःस्थाया प्रतिमाया अधावर्तीत्य पठ्यते लेख — ' सवत् ११४७ वर्षे श्रीखरतरगच्छेशश्रीजिनशेखरसूरिभि श्रीऋषभबिम्ब कारापित ॥ इत्यत्र समय-गच्छ-सूरिपदानि चिन्त्यानि ।

स्थित कारितम्। श्रीऋषभनाथ–श्रीपार्श्वनाथचैत्यद्वय प्रतिष्ठितम्। केचित् सम्यक्त्वधारिण, केचिद् देशविरतिग्राहिण श्रावका बभूवु । केचित् सर्वविरतिमग्रहीषुर्देवपालगणिप्रभृतय । एव तेषा समाधानमुत्पाद्यात्र जयदेवाचार्य प्रेषयिष्याम इति भणित्वा पुन पश्चिमदेशे विहृता ।

वाग्जडदेशे चचरी–रचना

ततो वाग(ग्ज)डदेशे समायाता व्याघ्रपुरे। तत्र स्थितै श्रीजयदेवाचार्या शिक्षा दत्त्वा रुद्रपल्ल्या प्रेषिता । तत्र स्थितैरेव श्रीजिनवल्लभसूरिप्ररूपितश्रीचैत्यगृहविधिस्वरूपा चच्च(र्च)री कृता। सा च टिप्पनके लेखयित्वा प्रेषिता मेहर–वासलप्रभृतिश्रावकाणां ज्ञानार्थं विक्रमपुरे। देवधरसत्कसण्हियाभिधानजनकगृहसमापे पौषधशालाऽस्ति। तस्यामुपविश्य श्रीजिनदत्तसूरिभक्तश्रावकै[रुच्छोटित चच्च(र्च)रीटिप्पनकम्। अत्रान्तरे मदोन्मत्तेन देवधरेणागत्य चच्च(र्च)रीटिप्पनकमिति भणित्वा हस्तादुद्दाल्य द्विधा कृत तच्चच(र्च)रीटिप्पनकम्। तस्य च किमपि कर्तुं] न शक्यते उन्मत्तत्वादेव। तत्पितुरग्रे कथिता वार्ता। तेनोक्तम्–'बाढ दुर्दान्त एष, तथापि वारयिष्याम'। पुनरपि पूज्येभ्यो दत्ता श्रावकैर्विज्ञप्तिका। तदन्तर्लिखित चच्च(र्च)रीटिप्पनकपाटनस्वरूपम्। पूज्यैरपि लेखा[र्थ]मवधार्य पुनर्लेखयित्वा द्वितीयटिप्पनक चच्च(र्च)र्या: प्रेषितम्, लेखश्च प्रेषित । इद च लिखितम्–देवधरस्योपरि विरूपक केनापि न भणनीयम्, देव-गुरुप्रसादादेष भव्यो भविष्यति। तच्च द्वितीयटिप्पनक प्राप्त सत् प्रणिपत्य श्रावकैरच्छोटित समाधान जातम्। देवधरेण पुनश्चिन्तितम्–यद्यपि मया टिप्पनक पाटितम्, तथाप्याचार्यैं पुनरपि प्रेषितम्, अत्र कारणेन केनापि भवितव्यम्। तत् प्रच्छन्न परिभावयाम्येकान्ते किं तत्र लिखितमास्ते(मस्ति)"। ततो यदा श्रावका टिप्पनक स्थापनाचार्यालये मुक्त्वा द्वार स्थगयित्वा गतास्तदा स्वगृहादुपरि चा(वा)टकेन प्रविश्य बहिर्द्वारे स्थगितेऽपि टिप्पनक गृहीत वाचयितु च प्रवृत्त । ततो यथा यथा—

" जहि उस्सुत्तजणक्कमु कु नि किर लोयणिहि
मारतउ नवि दीसइ सुविहिपलोयणिहि।
निसि न न्हाणु न पइट्ठ न [ साहुहि ] साहुणिहि
निसि जुवइहिं पवेसु न नट्ठु विलासिणिहि ॥ [ चा १६ ]
बडि अधारिवइ दिणयरि जहि नवि जिणगुरुओ
दीसइ धरिउ न गुत्तइ जहि जणि तूररओ। [ चा १८ ]
जहि रयणिहि रहभमणु कयाइ न कारियइ
लउडारसु जहि पुरिसु वि दितउ वारियइ ॥ [ चा १९ ]

जहि सावय तंबोलु न मक्खहि लिंति न य
जहि पाणहिय धरिंति न सावय सुद्धनय।
जहि भोयणु नवि सयणु न अणुचिउ बइसणउ
सहु पहरणि न पवेसु न दुट्ठउ बुल्लणउ ॥ [ का २१ ]
जहि न हासु नवि हुड्ड [ न खिड्ड ] न रूसणउ
किंत्ति[ नि ]मित्तु न दिज्जइ जहि धणु अप्पणउ।
करहि जि बहु आसायण जहि ति न मेलियहि
मिलिय ति केलि करिंति समाणु महेलियहि ॥ [ का २२ ][1]' इत्यादि ।

तदर्थमवधारयति तथा तथा मनसि प्रमोद उत्पद्यते। अहो! अत्यन्त शोभनो जिनभवनविधि । एतदनुसारेण स्थालीपुलाकन्यायेनान्यदपि सर्वं शोभन सम्भाव्यते। अतोऽत्र मार्गे मया प्रतिपत्ति कर्तव्या, 'केवल बिम्बमनायतन स्त्री पूजा न करोति' एतत् सन्देहद्वय प्रच्छनीयमस्ति' इति विचिन्त्य टिप्पनक तथैव धृत्वा सन्मार्गविहित-चेता स्वगृहमागतो देवधर ।

इतश्च वागडदेशे स्थितैः श्रीपूज्यैरपि ये धाराया प्रेषिता आसस्ते सर्वेऽप्यानायिता सिद्धान्त श्राविता । तत स्वदीक्षितो जीवदेवनामाऽऽचार्यपदे सस्थापित । तथा दश वाचनाऽऽचार्या कृतास्तद्यथा वा० प० जिनरक्षित १, वा० प० शीलभद्रगणि २, वा० प० स्थिरचन्द्रगणि ३, वा० प० ब्रह्मचन्द्रगणि ४, वा० प० विमलचन्द्रगणि ५, वा० वरदत्तगणि ६, वा० भुवनचन्द्रगणि ७, वा० वरणागगणि ८, वा० रामचन्द्रगणि ९, वा० माणिभद्रगणिश्चेति १० दश।

शिष्यादिभ्य पद-प्रदानम्

तथा पञ्च महत्तरा कृतास्तथाहि—श्रीमतिमहत्तरा १, जिनमतिमहत्तरा २, पूर्णश्रीमहत्तरा ३, जिनश्रीमहत्तरा ४, ज्ञानश्रीमहत्तरा ५ [चेति]।

तथा हरिसिंहाचार्याणा शिष्यो मुनिचन्द्राभिध उपाध्याय आसीत्, तेन च जिनदत्तसूरि प्रार्थितोऽभूद्—'यदि कश्चिन्मदीयशिष्यो योग्यो भवता समीपे समागच्छति तदा तस्याचार्यपद दातव्यमेव' इति प्रतिपन्न प्रभुभि । ततस्तस्य मुनिचन्द्रोपाध्यायस्य शिष्यो जयसिंहनामा मुनीन्द्रपदे निवेशित । तस्यापि शिष्यो जयचन्द्रनामा पत्तने समवसरणे सूरिपदे स्थापित । द्वयोरप्यग्रे भणितं यथा 'युष्माभिरस्मदुक्तरीत्या प्रवर्तितव्यमिति' ।

१ परि० ४ पृ ११२ प्रान्ते द्रष्टव्यम् ।

एव पदस्थान् कृत्वा ते[षा] शिक्षा दत्त्वा सर्वेषा विहारादिस्थानानि भणित्वा स्वयम जयमेरौ विहृता श्रीपूज्या । तत्र च श्रावकैश्चैत्यगृहत्रयाम्बिकाऽऽदि-

अजयमेरौ चैत्यगृहत्रय-प्रतिष्ठा

स्थानानि पर्वतप्रगुणीकृतानि सन्ति । तत श्रीजिनदत्तसूरिभि शोभनलग्ने मूलनिवेशे जिनमदिरेषु प्रचिक्षिपिरे वासा । तत शिख रादिनिवेश कारयामासु श्रावका ।

इतश्च श्रीविक्रमपुरे सण्हियापुत्रदेवधरेण श्रीजिनदत्तसूरिप्रेपितचच(र्च)रीटिप्पनक-

चर्चरी-प्रभाव विक्रमपुरे विहार

दर्शनोन्मीलितसद्दर्शनकारिविधिबोधेन पञ्चदशस्वकुटुम्बश्रावकसमुदाय कृत्वा स्वजनकश्रे० आसदेवादयो भणिता श्रावका –'भो ! मयाऽत्र श्रीजिनदत्तसूरयो विहार कारयितव्या'। तस्य चाग्रे कोऽपि किमपि भणितु न शक्नोति । श्राद्धसमुदायेन निर्गतो नागपुरे सम्प्राप्त । तदानीं च तत्र देवाचार्यो विशेषेण प्रसिद्धिपात्र वर्तते । देवधरोऽपि विक्रमपुरादाग(दम्र)त प्रसिद्धोऽस्ति जात श्रुतस्तेन । पश्चाद् देवगृहे व्याख्यानप्रस्तावे देवाचार्य उपविष्ट आस्ते । देवधरोऽपि पादप्रक्षालनादिशौच कृत्वा देवगृह गत । देवव दनादि कृत्वा वन्दितो देवाचार्य ,तेनापि पृष्टा क्षेमवार्ता । तत प्रथमत एव देवधरेण पृष्ट आचार्य –'भगवन् ! [देवगृहे] रात्रौ स्त्रीप्रवेश–प्रतिष्ठा–बलिविधान–नन्यादिकयुज्यते नवा ?'। तच्छ्रुत्वा देवाचार्यश्चिन्तयति–'निश्चित कथचिज्जिनदत्ताचार्य मन्त्रोऽस्यकर्णे प्रविष्टोऽतस्तद्वासित इव लक्ष्यते' इति विचिन्त्योक्तम्–"श्रावक ! रात्रिस्त्री-प्रवेशादिक सङ्गत न भवति । देवधर ––तर्हि किं न वार्यते ?। आचार्य ––लक्षसङ्ख्य लोकानां मध्ये को वार्यते ?। देवधर ––भगवन् ! यत्र देवगृहे जिनाज्ञा न प्रवर्तते, किं तर्हि जिनाज्ञानिरपेक्ष स्वेच्छया जनो वर्तते तज्जिनगृह [जन]गृह वा प्रोच्यते ? इति प्रतिपादयध्व यूयम् । आचार्य ––यत्र साक्षाज्जिनोऽन्तर्निविष्टो दृश्यते, तत् कथ जिनम न्दिर नोच्यते ?। देवधर ––आचार्य ! वय तावन्मूर्खा परमेतद् वयमपि जानीमो यदुत यत्र यस्याज्ञा न वर्तते, तद् गृह तदीय नोच्यते । एव च पाषाणरूपार्हद्बिम्बमा-श्रान्तर्निवेशनेन भगवदाज्ञापरिहारेण स्वेच्छया व्यवहारे कथ नाम तज्जिनमन्दिरमुच्यते ? परमेव जानाना अपि यूय प्रवाहमार्ग न निवारयध्वे, प्रयुत पोषयध्वे तदेते वन्दिता अनुज्ञापिताश्च मया यूयम्––'यत्र तीर्थकराज्ञा प्रवर्तते, स मार्गो मयाऽभ्युपेतव्य' इत्यभिधायोत्थितो देवधर । सहानीतस्वकुटुम्बरूपश्रावकाणां जात स्थिरीकरण विधिमार्गविषये । प्राप्त श्रावकसमुदायसहितोऽजयमेरौ । वन्दिता भावसार श्रीजिनदत्तसूरय । तदभिप्रायावगमपूर्वक कृता पूर्वमेवदीक्षा जातोऽसौ नि सन्देह । अभ्यार्थिता प्रभव श्रीविक्रमपुरविहार प्रति । ततो विहारेण तत्र देवगृह-बिम्बाम्बिका-गणधरादि-प्रतिष्ठा विधाप समागता देवधरेण सह श्रीविक्रमपुरे । प्रबोधितास्त्रयो जना बहु । स्थापिता धर्ममहार्घप्रतीता ।

तत उच्चाया गच्छतामन्तरे ये भूतादयस्तेऽपि प्रतिबोधिता, किं पुनरुच्यते

प्रतिबोध-विचक्षणता

यल्लोके ?। ततो नगरे विहृता । ततस्त्रिभुवनगिरौ प्रतिबोधितस्तत्र कुमारपालो नाम राजा । कृतस्तत्र प्रचुरतरयतिजनविहार । प्रतिष्ठितो भगवान् शान्तिनाथदेव । तथोज्जयिन्या विहारेण प्रतिबोधित पूज्यैर्योगिनीचक्रम् ।

तथैकदा श्रीचित्रकूटप्रवेशके दुष्टैरपशकुनाय सम्मुखीकृतो रश्मिबद्ध कृष्ण भुजङ्गम । ततो मन्दीभूतानि गीत-वादित्रादीनि । श्रावका अप्यहो ! न सुन्दरमिति जाता सविषादा । तत प्रोक्त ज्ञानदिवाकरै श्रीजिनदत्तसूरिभि -'भो ! किमेव विमनस्का यूयम् ? । यथैष कृष्णभुजङ्गो रज्जुबद्ध एवमन्येऽपि ये केचनास्मद्द्वेषिणस्तेषा बन्धन पतिष्यतीति प्रेरयतातीव सुन्दर शकुनमेतत्' । पुनरग्रतो गच्छता दुष्टैरेका कृत्तनासिका दुर्निमित्तविधानाय प्रेषिता । सा चाग्रत स्थिता दृष्टा पूज्यपादैर्जल्पिता च यथा—'आई ! मही ?' ततस्तया दुष्टरण्डया दत्त प्रतिवच -'भल्लइ धाणुक्कइ मुक्की ।' पुनरुक्ता किञ्चिद् विहस्य सप्रतिभै पूज्यैर्यथा-"पक्खाहरा तेण तुह छिन्ना" तत सा गेय(गया) विलक्ख उत्तरविक्खुट्टी ( ? गता विलक्षा निरुत्तरा )

इत्यनेकाश्चर्यनिधानाना निरन्तर किङ्करैरिव सुरै सर्वदोपास्यमानपादानां

उपसहार

करुणासमुद्राणा धारापुरी-गणपद्रादिस्थानेषु प्रतिष्ठितवीर-पार्श्व-शान्त्यजिततीर्थकृद्बिम्ब-देवगृहशिखराणा स्वज्ञानबलदृष्टनिजपट्टोद्धार-कारितासलाङ्गरुहाणां भास्करवद् विबोधितभुवनमण्डलभव्याम्भोरुहाणामेतच्छास्त्रकाराणा श्रीजिनदत्तसूरीणा चरितलेश प्रतिपादित ॥"

समनुवदन्ति समर्थयन्ति च सुमतिगणिसङ्कलितमेतच्चरितमेतदनुयायिनश्चारित्रसिंह-

जिनदत्तसूरिप्रशसकाः

गणि-सर्वराजगणिप्रभृतय पूर्वोक्तगणधरसार्धशतकवृत्तिप्रोद्धारका । तथा चान्ये प्रशस्तसुसन्ततिपरम्पराप्रविष्टा प्रतिष्ठिता प्रसिद्धा प्राज्ञा । तथा हि वि० स० १३०७ वर्षे पूर्णकलशगणि --

" तत्पट्टे जिनदत्तयोगितिलक सन्मार्गपद्मार्यमा "

--प्राकृतद्व्याश्रयवृत्तौ ( प्रश० श्लो० २ )

वि स १३१२ वर्षेऽभयतिलकगणि —

" तपनाम्बरसूरडम्बरधर कृष्णद्युतिर्दैवत

सेव्य श्रीजिनदत्तसूरिरनिम प्राच्या युगाग्रीयताम् ।

एव पदस्थान् कृत्वा ते[षा] शिक्षा दत्त्वा सर्वेषा विहारादिस्थानानि भणित्वा स्वयम जयमेरौ विहृता श्रीपूज्या । तत्र च श्रावकैश्चैत्यगृहत्रयाम्बिकाऽऽदिस्थानानि पर्वतप्रगुणीकृतानि सन्ति । तत श्रीजिनदत्तसूरिभि शोभनलग्ने मूलनिवेशे जिनमन्दिरेषु प्रचिक्षिपिरे वासा । तत शिख रादिनिवेश कारयामासु श्रावका ।

अजयमेरौ चैत्यगृहत्रय-प्रतिष्ठा

इतश्च श्रीविक्रमपुरे सण्हियापुत्रदेवधरेण श्रीजिनदत्तसूरिप्रेषितचच्च(र्च)रीटिप्पनकदर्शनोन्मीलितसद्दर्शनकारिविधिबोधेन पञ्चदशस्वकुटुम्बश्रावकसमुदाय कृत्वा ॥ स्वजनकश्रे० आसदेवादयो भणिता श्रावका —'भो ! मयाऽत्र श्रीजिनदत्तसूरयो विहार कारयितव्या' । तस्य चाग्रे कोऽपि किमपि भणितु न शक्नोति । श्राद्धसमुदायेन निर्गतो नागपुरे सम्प्राप्त । तदानीं च तत्र देवाचार्यो विशेषेण प्रसिद्धिपात्र वर्तते । देवधरोऽपि विक्रमपुरादाग(द्य)त प्रसिद्धोऽस्ति जात श्रुतस्तेन । पश्चाद् देवगृहे व्याख्यानप्रस्तावे देवाचार्य उपविष्ट आस्ते । देवधरोऽपि पादप्रक्षालनादिशौच कृत्वा देवगृह गत । देववन्दनादि कृत्वा वन्दितो देवाचार्य ,तेनापि पृष्टा क्षेमवार्ता । तत प्रथमत एव देवधरेण पृष्ट आचार्य —'भगवन् ! [देवगृहे] रात्रौ स्त्रीप्रवेश—प्रतिष्ठा—बलिविधान—नन्द्यादिकयुज्यते नवा ?' । तच्छ्रुत्वा देवाचार्यश्चिन्तयति—'निश्चित कथञ्चिज्जिनदत्ताचार्य मन्त्रोऽस्यकर्णे प्रविष्टोऽतस्तद्वासित इव लक्ष्यते' इति विचिन्त्योक्तम्—"श्रावक ! रात्रिस्त्रीप्रवेशादिक सङ्गत न भवति । देवधर —तर्हि किं न वार्यते ? । आचार्य —लक्षसङ्ख्य लोकानां मध्ये को वार्यते ? । देवधर —भगवन् ! यत्र देवगृहे जिनाज्ञा न प्रवर्तते, किं तर्हि जिनाज्ञानिरपेक्ष स्वेच्छया जनो वर्तते तज्जिनगृह [जन]गृह वा प्रोच्यते ? इति प्रतिपादयध्व यूयम् । आचार्य —यत्र साक्षाज्जिनोऽन्तर्निविष्टो दृश्यते, तत् कथ जिनमन्दिर नोच्यते ? । देवधर —आचार्य ! वय तावन्मूर्खा परमेतद् वयमपि जानीमो यदुत यत्र यस्याज्ञा न वर्तते, तद् गृह तदीय नोच्यते । एव च पाषाणरूपार्हद्बिम्बमात्रान्तर्निवेशनेन भगवदाज्ञापरिहारेण स्वेच्छया व्यवहारे कथ नाम तज्जिनमन्दिरमुच्यते ? परमेव जानाना अपि यूय प्रवाहमार्ग न निवारयध्वे, प्रत्युत पोषयध्वे तदेते वन्दिता अनुज्ञापिताश्च मया यूयम्—'यत्र तीर्थकराज्ञा प्रवर्तते, स मार्गो मयाऽभ्युपेतव्य' इत्यभिधायोत्थितो देवधर । सहानीतस्वकुटुम्बरूपश्रावकाणां जात स्थिरीकरण विधिमार्गविषये । प्राप्त श्रावकसमुदायसहितोऽजयमेरौ । वन्दिता वारवार श्रीजिनदत्तसूरय । तदभिप्रायावगमपूर्वक दृष्ट्वा पूर्वदेशना जातोऽसौ नि सन्देह । अभ्यर्थिता प्रभव श्रीविक्रमपुरविहार प्रति । ततो विस्तरेण तत्र देवगृह-बिम्बाम्बिका-गणधरादिप्रतिष्ठा विधाय सकगण देवधरेण सह श्रीविक्रमपुरे । प्रवेशमहोत्सवो जातो बहु । स्थापिता श्रीमहावीरप्रतिमा ।

चर्चरी-प्रभाव
विक्रमपुरे विहार

तत उच्चाया गच्छतामन्तरे ये भूतादयस्तेऽपि प्रतिबोधिता, किं पुनरुच्यते

प्रतिबोध-विचक्षणता

यल्लोके ? । ततो नगरे विहृता । ततस्त्रिभुवनगिरौ प्रतिबोधितस्तत्र कुमारपालो नाम राजा । कृतस्तत्र प्रचुरतरयतिजनविहार । प्रतिष्ठितो भगवान् शान्तिनाथदेव । तथोज्जयिन्या विहारेण प्रतिबोधित पूज्यैर्योगिनीचक्रम् ।

तत्रैकदा श्रीचित्रकूटप्रवेशके दुष्टैरपशकुनाय सम्मुखीकृतो रश्मिबद्ध कृष्ण भुजङ्गम । ततो मन्दीभूतानि गीत–वादित्रादीनि । श्रावका अप्यहो ! न सुन्दरमिति जाता सविषादा । तत प्रोक्त ज्ञानदिवाकरै श्रीजिनदत्तसूरिभि –'भो ! किमेव विमनस्का यूयम् ? । यथैष कृष्णभुजङ्गो रज्जुबद्ध एवमन्येऽपि ये केचनास्मद्दुष्टास्तेषा बन्धन पतिष्यतीति प्रेक्ष्यतामतीव सुन्दर शकुनमेतत्' । पुनरग्रतो गच्छता दुष्टैरेका कृत्तनासिका दुर्निमित्तविधानाय प्रेषिता । सा चाग्रत स्थिता दृष्ट्वा पूज्यपादैर्जल्पिता च यथा—'आई ! भल्ली ?' ततस्तया दुष्टरण्डया दत्त प्रतिवच –'भल्लइ घाणुक्कइ मुक्की।' पुनरुक्ता किञ्चिद् विहस्य सप्रतिभै पूज्यैर्यथा–"पक्खाहरा तेण तुह छिन्ना" तत सा गेय(गया) विलक्ख उत्तरविक्खुट्टी ( ? गता विलक्षा निरुत्तरा )

इत्यनेकाश्चर्यनिधानाना निरन्तर किङ्करैरिव सुरै सर्वदोपास्यमानपादाना

उपसहार

करुणासमुद्राणा धारापुरी–गणपद्रादिस्थानेषु प्रतिष्ठितवीर–पार्श्व-शान्त्यजिततीर्थकृद्बिम्ब-देवगृहशिखराणा स्वज्ञानबलदृष्टनिजपट्टोद्धार-कारितासलाङ्गरुहाणा भास्करवद् विबोधितभुवनमण्डलभव्याम्भोरुहाणामेतच्छास्त्रकाराणा श्रीजिनदत्तसूरीणा चरितलेश प्रतिपादित ॥"

समनुवदन्ति समर्थयन्ति च सुमतिगणिसङ्कलितमेतच्चरितमेतदनुयायिनश्चारित्रसिंह-

जिनदत्तसूरिप्रशसका

गणि–सर्वराजगणिप्रभृतय पूर्वोक्तगणधरसार्धशतकवृत्तिप्रोद्धारका । तथा चान्ये प्रशस्तसुस्तत्परम्पराप्रविष्टा प्रतिष्ठिता प्रसिद्धा प्राज्ञा । तथा हि वि० स० १३०७ वर्षे पूर्णकलशगणि —

" तत्पट्टे जिनदत्तयोगितिलक स मार्गपद्मार्यमा "

—प्राकृतद्व्याश्रयवृत्तौ ( प्रश० श्लो० २ )

वि स १३१२ वर्षेऽभयतिलकगणि —

" तत्पट्टाम्बरसूरडम्बरधर कृष्णद्युतिर्दिवतै

सेव्य श्रीजिनदत्तसूरिरिविभ प्राज्या युगाग्र्यीयताम् ।

केनाप्यस्खलितप्रतापगरुडो यस्य त्रिलोक्या स्फुर-

स्त्रोट त्रोटमपास्यति श्रितजता विघ्नाहिपाशान् क्षणात् ॥"

—संस्कृतद्व्याश्रयवृत्तौ (प्रश० श्लो० ९

"आसीत् पदेऽस्य जिनदत्तगुरुर्भटेन

येनादधे विधिपथः सुवह खिलोऽपि।"

—न्यायालङ्कारप्रान्ते।

वि स १३१२ वर्षे चन्द्रतिलकोपाध्याय —

"ततोऽजनि श्रीजिनदत्तसूरिर्येनेह कल्याणमदायि भूरि।

य पारतन्त्र्य विषय विधिं च प्रकाशयामास विशेषतोऽपि ॥

भव्यान् सार्धं कुटुम्बै शतश उपकृतौ कर्मठोऽबोधयद् यो

यस्याज्ञामत्र देवा अपि शिरसि दधुर्भक्तिभारेण नम्रा ।

यन्नामामानधामावरितसुरवर-क्षोणिजन्माभिमान

स्मर्तु वद्धादराणा दलयति विपदोऽद्यापि दत्ते च भद्रम् ॥"

—अभयकुमारचरिते (प्रश० श्लो० १२-१३)

वि स १३१७ वर्षे लक्ष्मीतिलकगणि —

"चिन्तामणि कल्पतरुर्नराकौ कुर्वन्ति भव्या किमु कामगव्या ?।

प्रसीदतु श्रीजिनदत्तसूरि, सर्वे पदा हास्तिपदे प्रविष्टा ॥"

"तत्पट्टे जिनदत्तसूरिरुदगाद् य सतत दैवतै

सेव्यांघ्रिर्भृशमद्भुतैरतिशयैस्तैस्तै सदाऽलङ्कृत ।

आख्यातोऽम्बिकया स्वय युगवरस्तीर्थङ्करस्य प्रति-

र्वृत्तेऽप्ययपदे ततश्च जिन इत्याख्यां दधौ सान्वयाम् ॥"

—जिनेश्वरसूरीयश्रावकधर्मवृत्तौ (प्रा० श्लो० ९, प्रश० श्लो० ९)

वि स १३२० वर्षे प्रबोधचन्द्रगणि —

"धीर येऽविहृतदम्भिरत्र भुवने मन्दान्धकारव्यथा-

ऽत्यन्यत्तदेशारदहरिभिर्मध्याह्नगुप्तेरिताम्।

एते सम्प्रति मरुधरवसुधापालावम्भू यथा

निर्दम्भ इव नौम्यहम् यदि सार कल्ज्ञसूरेऽरि दि ॥

तै पूज्यपादैर्जिनदत्तसूरिभि कृतेऽत्र शास्त्रे जिनशासनानुगे ।
संदेहदोलावलिनाम्नि लेशत करोमि वृत्तिं स्वगुरूपदेशत ॥ "

" तत्पट्टे **जिनदत्तसूरि**रभवन्मार्तण्डचण्डप्रभो
यस्मिन् विष्टपशर्मणे त्वष्टु इत स्वच्छन्दसा भ्राम्यति ।
तज्ज्योतिर्गलहस्तिता घनतम पिण्ड्ा इव द्विड्-गजा
जग्मुर्दिक्षु विदिक्षु मड्क्ष्वभिभव वक्तु तु दिग्दन्तिनाम् ॥ "

--जिनदत्तसूरीयसन्देहदोलावल्या बृहद्वृत्तौ ।

वि स १३२६ (?) वर्षीये जिनमन्दिरप्रशस्तिशिलालेखे--

" तस्मिन् महात्मनि समेयुषि नाकलोक
तीर्थं बभार भगवान् **जिनदत्तसूरि** ।
नामापि यस्य बत पार्श्वविभोरिवाशु
सर्व भय हरति मगलमातनोति ॥ १०३ ॥

यस्मिन्नजनभृगभासि तरुणांभोभृत्ककुत्कुजर-
श्रीलुंटाकगभीरधीरमधुरध्वाने वृष जल्पति ।
पीयूषैरिव पूर्यमाणमनसो भव्या प्रजह्लादिरे
विश्वे वादिगजा गलन्मदभरा द्राक्काविशीक्य दधु ॥१०४॥"

---वीजापुरवृत्तान्ते ( पृ ४ )

---

१ " इह हि किलातिशायिज्ञानिभिभगवद्भि [ भट्टारक ] श्रीजिनदत्तसूरिभिर्दुषमाकाल-माहात्म्याविर्भवदसन्मार्गघसर्पोल्लसदनेकसशयशङ्कापङ्कस्कलङ्कितानि भविष्यद्धार्मिकलोकधर्मानुष्ठानानि मा भूवन्निति परोपकाररसिकतया स्वोत्प्रेक्षितसम्भाव्यप्रश्नमालानुसारि सारोत्तराभिधायक सशयपद प्रश्नोत्तरनामक प्रकरण चक्रे तच्चेह '**सन्देहदोलावली**' इति नाम्ना प्रसिद्धम् ।

* * * * *

एव च 'श्रीवीन( ठ )णहिडाभिधानपत्तनवास्तव्यया कयाचित् खरतरपरमश्राविकया प्रतिदिनमात्मगुरूपदिष्टधर्मानुष्ठानान्यनुतिष्ठन्त्या स्वव्यापरणाननुरूपगच्छान्तरीयश्रावकव्यापरणदर्शनात् तथाविधसुगुरुसम्पर्काभावाच्च समुद्भवन्त सन्देहा सम्यगुत्तरलाभाय विज्ञप्तिकाया लिखित्वा दूरदेशप्रवेशपेशलितानायप्रायकु[ ज ]नमनसा श्रीअम्बिकादेवताप्रकटितयुगप्रधानत्वालङ्कृतनामधेयाना **श्रीजिनदत्तसूरीणा** पादमूल प्रेषिता । श्रीमत्पूज्यैश्च वाचनानन्तरमेव तस्या भविष्यल्लोकानामप्युपकाराय सरलाक्षितत्वात् सुगमाथ साधगनगाथाप्रमाणमेतत् प्रकरण विरचितम् ' इत्ययमपि प्रसिद्धि र्वृद्धपरम्परया निशम्यमाना समूला भवतीति । "

—सन्देहदोलावलीबृहद्वृत्तौ प्रबोधचन्द्रगणि ।

वि स १३२८ वर्षे प्रबोधमूर्तिगणि ( जिनप्रबोधसूरि )—

" तच्छिष्यमौलिजिनदत्तगुरुप्रवीर-

श्चक्रे खिल **विधिपथं** सुवह समन्तात् । "

—कातन्त्रदुर्गपदप्रबोधे ।

वि स १३३४ वर्षे जिनप्रबोधसूरिणा प्रतिष्ठिता जिनदत्तसूरिमूर्तिरद्यापि प्रेक्ष्यते ऽणहिलपाटक-पत्तने ।[1]

[2] वि स १३८३ वर्षे जिनकुशलसूरि —

" समस्तयोगिनीचक्रदेवदेवताव्रातविहितशासना नानाप्रभावनाप्रभावित-श्री जिनशासना महर्द्धिकनागदेवश्रावकसमाराधितश्रीअम्बिकालिखितश्री**जिनदत्त**सूरियुगप्रधानेत्यक्षरवाचनमार्जनसमुपार्जितयुगप्रधानपदसत्यताप्रधाना सकलातिशायिप्रगुण-गुणगणमणिखनय सकलशिष्टचूडामणय प्रबोधिता यग च्छीयातुच्छभूरिसूरय श्री**जिन-दत्त**सूरय × × "

" तत्राभवन् श्री**जिनदत्त**सूरय शश्वद् यदाज्ञा लुलुपुर्न भूरय ।

देवा नृदेवा नततिर्यगङ्गिन सिन्धुर्न चाग्निर्न च योगसङ्गिन ॥ "

—जिनदत्तसूरीयदेववन्दन( सम्यक्त्वारोपविधि )कुलकवृत्तौ ।

वि स १४११ वर्षे तरुणप्रभसूरि —

" तत्पट्टशैलेऽजनि योगिराज सुरानत श्री**जिनदत्त**सूरि ।"

—श्रावकप्रतिक्रमणसूत्रवृत्तौ ।

वि स १४१२ वर्षे भुवनहितोपाध्याय —

"तत्पट्टे **जिनदत्त**सूरिरभवद् योगीन्द्रचूडामणि

मिथ्याध्वान्तनिरुद्धदर्शन

१ 'टांगडिआवाडा'नामकपाटक जिनमन्दिरे । मूर्तिप्रतिष्ठालेख इत्थ पठ्यते—

" संवत् १३३४ वैशाखवदि ५ श्रीजिनदत्तसूरिमूर्ति श्रीजिनेश्वरसूरिशिष्यश्रीजिन-प्रबोधसूरि[illegible] [ प्रतिष्ठिता ] ।"

२ 'तच्छिष्य स्वल्पमेधा अपि [illegible]—

श्रीजिन[illegible] विरचित[illegible]याम् ।

सम्यक्त्व[illegible]

[illegible] ॥

—[illegible]( [illegible] )[illegible] ( [illegible] १० )

श्रावक यो न्यदेशि सुगुरु क्षेत्रेत्र सर्वोत्तम
सेव्य पुण्यवता सता सुचरण-ज्ञानश्रिया सत्तम ॥ २१ ॥"

—राजगृहगिरिप्रशस्तौ ।

वि स १४७३ —९९ वर्षे जयसागरगणि —

"तत्रा यदा ज्ञान—दर्शन—चारित्रगुणैकभूमय श्रीमदम्बिकोपासनोपलब्धकराक्षर-श्रीनागदेवसुश्रावकविज्ञातप्रकटीकृतयुगप्रधानपदवीसरिन्महाब्धयस्त्रिभुवनातिशायिभाग-धेया नानाश्रुतरत्नाकरा क्वचित् तथाविधदुष्टरोगव्य तरादिदोपदूपित धार्मिकजनमुद्वीक्ष्या-क्षामकारुण्यविवशमनस श्रीजिनदत्तसूरयो दोपप्रतिक्रियाकरणदक्ष तत्ताद्दक्षदेवदेवता-प्रणिधानप्रत्यस्तप्रतिपक्ष हितैपिमनीपिमनुजकण्ठकन्दलीनिमलस्रगनुकार 'त जयउ' इति लोकप्रसिद्धनामावतार जागरूकास्तोकप्रभावप्राग्भार **श्रीविधिसङ्घ**रक्षाऽर्थ स्मरणास्तव विरचितव त ।"

—जिनदत्तसूरीयस्मरणस्तववृत्तौ ।

"इह हि पुरा **नाग**देवसुश्रावकयुगप्रधानजिज्ञासाविहितसतोपवासस-तुष्टोज्जय त निवासिश्रीअम्बिकादेवता तत् ह(द्ध)स्तलिखितेतराचार्यज्ञेयलिपिरूपाक्षरवाचनोत्पुसनप्रका-रप्रकटितयुगप्रधानभावा ज्ञान—दर्शन—चारित्रागण्यपुण्यातिशयसत्त्वरञ्जितश्रीशासनदेवता-वितीर्णोज्जयिनास्थितमहाकालप्रासादमध्यवर्तिशैलमयमारपट्टपीटका त सगोपित—पुराश्री **सिद्ध**सेनदिवाकरवाचित—दशपूर्वधरश्रीकालिकसूरिविरचितानेकाद्भुतश्रीप्रथमानुयोगसि—द्धा तपुस्तकरत्नार्थसम्यक्परिज्ञानजगद्विदितमहाप्रभावा निजप्रातिभवैभवविस्मापित—देव सूरय **श्रीजिनदत्तसूरयो** लोकप्रतिबोधार्थं सुविहितविहारेण विहरन्तोऽ यदा रोगाद्युपद्रवो-पशमार्थं च सुगुरुजनपारतन्त्र्यस्तवरूप स्मरण महाप्रभाव 'मयरहिय' इति प्रसिद्ध चिकीर्पव × × × ।"

—जिनदत्तसूरीयगुरुपारत त्र्यस्तववृत्तौ ।

---

१ 'श्रीजिनवर्धनसूरिवचनामृतपायिवाचनाचार्यजयसागरगणिना विरचिता स्मरणस्तव-वृत्ति ।' इति प्रान्त पठ्यते ।—C

जयसागरगणिपरिचयो जे सा सूच्यामप्रसिद्धग्रन्थग्रन्थकृत्परिचये (पृ ५४)ऽस्माभिरकारि ।

२ वृत्तिप्रान्त 'श्रीसागरचन्द्रसूरिप्रसादात्' इत्युल्लेखदर्शनेनानुमीयते वि स १४५९ वर्षे जिनराजसूरिनिर्देशाज्जेसलमेरुदुर्गे लक्ष्मणराज्य खरतरगच्छकारित जिनप्रासादे गर्भगृह पार्श्वजिन-बिम्बस्थापकोऽय सागरच द्रसूरि स्यात् यस्य सूरेर्मूर्तिरद्यापि तत्र दृश्यते । तत्प्रासादप्रशस्ति शोधकेन जयसागरगणिना (जै सूची पृ ५४,६३) एपा वृत्तिः कृता सम्भाव्यते ।

"इह हि परोपकारकृतधियो विशुद्धसिद्धान्ताचारशृङ्गारितचारित्रश्रिय श्रीजिनदत्तसूरयस्तथाविधविषमदुष्षमासमुल्लसदसदुपदेशदायकवचनश्रवणान्यान्यक्रियाऽनुष्ठानदर्शनोद्भूतप्रभूतसन्देहावर्त्तपतित लोकमालोक्य कथञ्चित् तमुद्धर्तुमनस स्वपरसम्भावितप्रश्न तदनुसारितादृगुत्तरदानप्रधान सशयपदप्रश्नोत्तरनामक स देहदोलावलीति द्वितीयनामप्रसिद्ध प्रकरणमकार्षु ।"

—जिनदत्तसूरीयस देहदोलावल्या लघुवृत्तौ ।

वि स १९४४ वर्षे कमलसयमोपाध्याय—

"कूष्माण्ड्याऽऽस्तिकनागदेवतपसा स तुष्टया यद्–युग–
प्राधान्य प्रकटाकृत मुक्तिनामानन्दकन्दाम्बुदम् ।
सैष श्रीजिनदत्तसूरिरखिलश्रामण्यविद्योऽभवद्
यस्य श्लाघ्यचरित्रपङ्क्तिगणने नो पाटव कस्यचित् ॥"

—उत्तराध्ययनवृत्ति( सर्वार्थसिद्धि )प्रान्ते ।

वि स १५५३ वर्षे पद्ममन्दिरगणि —

"पट्टे तदीयेऽभवदद्भुतश्रीर्युगप्रधानो जिनदत्तसूरि ।
यो योगिनीचक्रमुखादिदेवगार्पे निजाज्ञा मुकुटीचकार ॥"

—ऋषिमण्डलवृत्तौ ( प्रश० श्लो० ८ )

वि स १६४६ (?) वर्षे समयसुन्दरोपाध्याय —
"यो योगिनाभ्यो जगृहे ददौ च वरान् वरान् जाग्रदनेकविद्य ।
प ापि पारान् स्वनशाचकार युगप्रधानो जिनदत्तसूरि ॥"

—कल्पसूत्रकल्पलतायाम् ( प्रश० श्लो० ४ )

"जिग्यिरे येन योगिन्यश्चतु पष्टिर्यतीन्दुना ।
सूरि श्रीजिनदत्तोऽभूत् तत्पद्माम्बुजभास्कर ॥"

—अष्टलक्षार्थी( प्रश० श्लो० १२ )

वि स १६४९–९१ वर्षे गुणविनयगणि —

" गुद्वानेररमन्नराहरिमु ग ारणप्र ीन
रेजे यस्य गररर ार गर ा यस्य रत्ती मुने।

मुक्तासारसरस्वती जनपदान् भव्यानभव्याश्रय
त श्रीमज्जिनदत्तसूरिमुगुरु चित्ते निधायाधुना ॥"

—रघुवंशवृत्तौ ( श्लो० ३ )

" प्रौढ प्रौढयुगप्रधानपदसाम्राज्य प्रतीत पुरा
देवोक्त्या भुवि नागदेवभविकश्राद्धस्य साक्षात् पुर ।
योगिन्योऽपि च येन मन्त्रमहिमप्रागल्भ्यतो जिग्यिरे
स्तुत्वा श्रीजिनदत्तसूरिमनघ तीव्रप्रतापारुणम् ॥ "

—दमयन्तीचम्पूवृत्तौ ।

" तत्पट्टेऽभूच्चतु षष्टियोगिनीना प्रसाधक ।
युगप्रधानतामाप्त सूरि श्रीजिनदत्तराट् ॥
यन्नाममन्त्रस्मरणात् सम्प्रत्यपि विलोक्यते ।
तडित्पातादिकष्टौघो ध्वस्यमान क्षणाद् भुवि ॥"

—सम्बोधसप्ततिकावृत्तौ ( प्रश० श्लो० ९–१० )

---

१ "श्रीमदकब्बरराजाधिराजलब्धप्रसादसौभाग्ये ।
राज्य शासति जनताऽऽनन्दकरे न्यायवृत्तिधरे ॥
श्रीरायसिंहभुवि निजभुजबलनिर्जितारिनृपराजे ।
सन्ध्यादिगुणविचक्षणमन्त्रीश्वरकर्मचन्द्रवरे ॥
विक्रमतो रस–हरिभुज–रस–शशिवर्षे जनोत्सवोत्कर्षे ।
श्रीमद्विक्रमनगरे विनिर्मिता विमलमतिगम्या ॥"

—रघुवंशवृत्ति ( प्रश० श्लो० १०–१२)

२ " श्रीविक्रमवंशोद्भवसद्विक्रमरायसिंहनृपराज्य ।
सत्कर्मकर्मचन्द्राभिधधीसखधुर्यसन्धार्ये ॥
श्रीमद्विक्रमभूपते स्वरसरस्वत–तर्क–शक्रप्रमा—
ख्याताया शरदि प्रमोदविसरभ्राजिष्णुपौराकुल
श्रीमेरुत्त्तकनाम्नि भद्रनगरेऽर्हच्चैत्यशोभाधरे
चक्रे श्रीदमयन्त्युदारचरित टीका महार्थां सुधी ॥
अकबरनृपाधिनृपतो विनयिनि शर–भुवन–सम्मिते वर्षे ।
श्रीमल्लाभपुरीय प्राकाशि परा पुरस्सुधियाम् ॥"

—दमयन्तीचम्पूवृत्ति ( प्रश० श्लो० १५–१६,१ )

"इह हि परोपकारकृतधियो विशुद्धसिद्धान्ताचारशृङ्गारितचारित्रश्रिय श्रीजिनदत्त सूरयस्तथाविधविषमदुष्षमासमुल्लसदसदुपदेशदायकवचनश्रवणान्यान्यक्रियाऽनुष्ठानदर्शनोद्भूतप्रभूतसन्देहगर्तपतित लोकमालोक्य कथञ्चित् तमुद्धर्तुमनस स्वपरसम्भावितप्रश्नतदनुसारितादृगुत्तरदानप्रधान संशयपदप्रश्नोत्तरनामक सन्देहदोलावलीति द्वितीयनामप्रसिद्ध प्रकरणमकार्षु ।"

—जिनदत्तसूरीयसन्देहदोलावल्या लघुवृत्तौ ।

वि स १९४४ वर्षे कमलसंयमोपाध्याय·—

"कूष्माण्ड्याऽऽस्तिकनागदेवतपसा सन्तुष्टया यद्-युग-
प्राधान्य प्रकटीकृत सुकृतिनामानन्दकन्दाम्बुदम् ।
सैष श्रीजिनदत्तसूरिरखिलश्रामण्यविद्योऽभवद्
यस्य श्लाघ्यचरित्रपङ्क्तिगणने नो पाटव कस्यचित् ॥"

—उत्तराध्ययनवृत्ति( सर्वार्थसिद्धि )प्रान्ते ।

वि स १५५३ वर्षे पद्ममन्दिरगणि —

"पट्टे तदायेऽभवदद्भुतश्रीर्युगप्रधानो जिनदत्तसूरि ।
यो योगिनीचक्रमुखादिदेवशार्थे निजाज्ञा मुकुटाचकार ॥"

—ऋषिमण्डलवृत्तौ ( प्रश० श्लो० ८ )

वि स १६४६ (?) वर्षे समयसुन्दरोपाध्याय —
"यो योगिनाभ्यो जगृहे ददौ च वरान् वरान् जाग्रदनेकनिय ।
प ापि पारान् स्ववशाचकार युगप्रधानो जिनदत्तसूरि ॥"

—कल्पसूत्रकल्पलतायाम् ( प्रश० श्लो० ४ )

"जिग्यिरे येन योगिन्यश्चतु षष्टिर्यतीन्दुना ।
सूरि श्रीजिनदत्तोऽभूत् तत्पट्टाम्बुजभास्कर ॥"

—अष्टलक्षार्थी( प्रश० श्लो० १२ )

वि स १६४६–९१ वर्षे गुणविनयगणि —

"गुदानेन्द्रमप्रवादविभुत्वा गारणप्रागीम
रेने यस्य सरस्वतार नरसग्र् मग्नयवर्ती युगे।

३ चैत्यवन्दनकुलकम् (प्रा) गा २८ ४* गणधरसप्तति (प्रा) गा ७०
५ उपदेशरसायनम् (अप०) गा ८० ६ चर्चरी (अप०) गा ४७
७ कालस्वरूपकुलकम् (अप०) गा ३२ ८ सर्वाधिष्ठायि(स्मरण)स्तोत्रम् गा २६

---

३ " सव्वन्नूण मय मएण रहिओ सम्म सया माहए
भव्वाण पुरओ पवाहविरओ निच्छम्म–निम्मच्छरो ।
सो मे धम्मगुरू मया गुणि–गुरू कल्लाणकारी वरा
लग्गो जो **जिणदत्त**–सोहणपहे नीमेसमुक्खावहे ॥"

इत्यन्तिमगाथायुक्तमेतद् वि स १३८३ वर्षे **जिनकुशलसूरिणा** चतुश्चत्वारिंशच्छत श्लोकपरिमितया वृत्त्या, लब्धिनिधानन संक्षिप्तटिप्पनेन च व्यभूष्यत । देववन्दनकुलक सम्यक्त्वारोपविधिकुलकमित्यादिनाऽस्यापरा सज्ञा ज्ञायत । वृत्ति–टिप्पनसमन्वितमेतत् प्रसिद्धम् ।

४ अप्रसिद्धमेतत् । अस्य नामोपलभ्यत गणधरसार्धशतक–वृत्त्यादौ ( अत्र भूमिका द्रष्टव्या पृ ५१ ) जेसलमेरुदुर्गीयभाण्डागारे १५० क्रमाङ्कपुस्तिकाया प्राप्यतेऽपि ।

५ " इय **जिणदत्तु**वएसरसायणु इह–परलोयह सुक्खह भायणु ।
कण्णजलिहिं पियति जि भव्वइ ते हवति अजरामर सव्वइ ॥"

इति प्रान्तपद्यपर्यवसितमेतद् वि स १२९४(२) वर्षे जिनपालोपाध्यायन शतचतुष्टयश्लोक परिमितया वृत्त्या सयोजितम् । तच्चात्र पूर्वमेव प्रकाश्यत ।

६ " इय जुगपवरह सूरिहि सिरि**जिणवल्लहह**
नायसमयपरमत्थह बहुजणदुल्लहह ।
तसु गुणथुइ बहुमाणिण सिरि**जिणदत्तगुरु**
करइ सु निरुवमु पावइ पउ जिणदत्तगुरु ॥'

इत्यन्त्यपद्योपेतैषा जिनपालोपाध्यायन वि स १२९४ वर्ष विहितया शतत्रयश्लोकप्रमितया वृत्त्या समायोजि । सा चात्र प्रथममेव प्रकाशमाव प्राप्नोति ।

७ " इय **जिणदत्तु**वएसु जि निसुणहि पढहि गुणहि परियाणहि जि कुणहि ।
त निव्वाण–रमणी सहु विल्सहि वलिउ न संसारिण मज्झु मिलिसहि ॥'

इति प्रान्तपद्यपर्यवसित द्वात्रिंशिकारूपमेतत् कुलक सूरप्रभोपाध्यायसङ्कलितया सार्धशतश्लोकमितया वृत्त्या साकमत्र काव्यत्रय्या तृतीयत्वन निवेश्य प्रकाशितम् । उपदेशरूपमप्येतत् 'कालस्वरूपकुलक' इति वृत्तिकाराभिमताभिधया प्राख्यायि । जिनपालोपाध्यायकृताऽस्य वृत्ति पत्तने विद्यत इति जैनग्रन्थावल्यामसूचि, किन्तु नास्माभि सा दृष्टा ।

८ त जयउ' इत्यादिपदेनोपलक्षितत्वात् तन्नाम्ना विशेषत प्रसिद्धम्, प्रान्त च—

" इय ना पन्न तिसञ्ज दुस्सज्झ तस्स नत्थि किं पि जए ।
**जिणदत्ताणाइ** ठिओ सुनिट्ठियप्प सुही होइ ॥'

इत्यनया गाथया समुपसंहृतमत्रैव मुद्रितम् । अस्य वृत्तिस्तु जयसागरोपाध्यायन वि स १४९५ (?) वर्ष विनिर्मिताऽप्रसिद्धा ।

वि स १६९४ वर्षे ज्ञानविमलोपाध्याय —

" तत्पट्टपूर्वाचलतिग्मरश्मयो युगप्रधाना **जिनदत्तसूरय** ।
दिदीपिरे श्रावकलक्षबोधका सुरासुरै संस्तुतपादपङ्कजा ॥ "

—शब्दप्रभेदवृत्तौ ।

क्षमाकल्याणादिकृतायामर्वाचीनायां खरतरगच्छपट्टावल्यामन्यत्रापि च प्राप्यते प्रस्तुतस्य सूरिवर्यस्य समुज्ज्वलयश सवलितमद्भुतमन्यदपि सच्चरितम्, किन्तु *कवि समयसामीप्यसम्भवि पूर्वतनमाधिक प्रामाणिकमिति तदेवात्र प्रादर्शि, समर्थितं चान्यप्रामा* णिकप्राज्ञानामभिप्रेतै । विस्तरभयात् तु विरम्यतेऽधिकवक्तव्यात् । विशेषजिज्ञासुना तदप्यवलोकनीयम् । सूरे स्वर्गमनसमय–स्थलादिनिर्देशस्तत्रेत्थमसूचि—

" अथैवंविधा क्षत्रिय–ब्राह्मणादिकुलीनलक्षश्राद्धप्रतिबोधका जलभ्रमोपरि कम्बलास्तरणादिप्रकारेण पञ्चनदीसाधका **सन्देहदोलावल्या**द्यनेकग्रन्थविधायका परकाय-प्रवेशिन्यादिविविधविद्यासम्पन्ना परोपकारकारिण परमयश –सौभाग्यधारिण श्रीखरतर-गच्छनायका महाप्रभावका **श्रीजिनदत्तसूरय** सवत् १२११ आषाढसुदि एकादश्यां *अजमेरुनगरेऽनशन कृत्वा स्वर्गं गता* ॥ ४८ ॥ " ख पट्टावल्याम् ।

## ग्रन्थरचना

प्राकृतापभ्रंशादिभाषायां पद्यप्रमाणपरिगणनया लघवोऽप्यर्थतोऽतिगम्भीरा देव– *गुरुस्तोत्र–चैत्यविधि–धर्मविधिप्रतिपादका विविधोपदेशपेशला* निम्नसूचिता ग्रन्था प्रस्तुतजिनदत्तसूरिप्रणीता ज्ञाता सन्ति ।

१ गणधरसार्धशतकम् (प्रा) गा १५०        २ सन्देहदोलावली (प्रा) गा १५०

---

१ " **जिणदत्तगणिगुणथुय** सयण्णय **सोमचंदविरइय** ।
भव्वेहिं भणिज्जउ भव–रयणिसनावमरहरउ ॥"

इति प्रान्त्यपद्योपात्तमवचूरि (परि० २) प्रादर्शि । अस्य द्वादशशतश्लोकपरिमिता बृहद्वृत्ति सुमतिगणिना वि सं १२९५ वर्षे निरमायि (ज भां सूची क्र. ३१३–३१५ अप्रसिद्ध० पृ ५०)

एतस्य षोडशशतश्लोकमाना अपरिमा वृत्ति सर्वराजगणिना विक्रमीयचतुर्दशशताब्द्यां समुद्धृता, मुद्रिता । बृहद्वृत्तेश्चाचार्यचरित्रैकदेशोद्धारकगणिनाकारि, प्रसिद्ध ।

२ " इय चउसयसमपयपय–पणुत्तरपयरण समासेणं ।
भणियं सुगुरुपरम्पर–जिणवल्लहसूरि–सीसेण ॥ "

इति प्रान्त्यगाथाप्रदर्शितं [illegible] वि० सं० ११२० वर्षे प्रबोधचन्द्र गणिना [illegible] बृहद्वृत्ति [illegible] । एतस्य [illegible] वि० सं० १४९५(?) [illegible] ।

## समकालीनसूरयः ।

प्रस्तुतजिनदत्तसूरि–जीवनसमये विक्रमस्य द्वादशशताब्द्या त्रयोदशशताब्द्याश्च प्रथमचरणे सत्ता बिभ्राणा प्रभूता प्रौढा सूरिपुङ्गवा समजनिषत, सूर्यैरिव यैर्जिन-प्रवचन–गगनाङ्गण स्वप्रतिभया प्राद्योति ।

तत्र च केषाञ्चिदुल्लेखोऽत्राजनि । तदितरेषा जिनभद्रसूरि–देवचन्द्रसूरि–देव भद्रसूरि–धनेश्वरसूरि–नन्नसूरि–पार्श्वदेवगणि (श्रीचन्द्रसूरि)–महेन्द्रसूरि–मुनिचन्द्र-सूरि–यशोदेवसूरि–यशोदेवोपाध्याय–रत्नप्रभसूरि–रामचन्द्रसूरि–रामदेवगणि–वर्धमा-नसूरि–शान्तिसूरि–सिद्धसूरि–हरिभद्रसूरि (१–२)–हेमचन्द्रसूरि (१–२) प्रभृतीना सक्षिप्तपरिचयस्त्वस्माभिरन्यत्र (जे भा सूच्याम्, अप्रसिद्ध०) अकारि ।

तथा चान्येषामाम्रदेवसूरि–चक्रेश्वरसूरि–चन्द्रप्रभसूरि–चन्द्रसेनसूरि–विजय-सिंहसूरि(१–२)–श्रीचन्द्रसूरि–हेमचन्द्रसूरिप्रभृतीना परिचय प्रो० पिटर्सनादिसङ्कलि-तरिपोर्टपुस्तकादिपर्यवलोकनेन, वादिदेवसूरि–वीराचार्य–हेमचन्द्रसूरिप्रमुखाणा चरित प्रभावकचरितादिप्रेक्षणेन, लक्ष्मणगण्यादीना चापरेषा परिचयस्तत्तत्कृतिसुपार्श्वचरितादि-प्रशस्तिप्रान्तांशनिरीक्षणेनावगस्यते । केषाञ्चिच्च परिचय प्रकाश्यमानपत्तनीयजैनभाण्डा-गारीयग्रन्थसूच्यादावपि प्रदर्शयिष्यत इति नेह तदर्थं प्रयत्यते ।

केवल जिनदत्तसूरेर्वादिदेवसूरि–हेमचन्द्रसूरिभ्या साक जन्म–दीक्षाऽऽदिसमय–स्थलादिविषयक समवक्तव्यमत्र कोष्ठके प्रदर्श्य सन्तुष्यते—

| | |
|---|---|
| ९ सुगुरुपारतन्त्र्यम् (प्रा) गा २१ | १० *विंशिका |
| ११ विघ्नविनाशिस्तोत्रम् (प्रा) गा १४ | १२ *उपदेशकुलकम् |
| १३* अवस्थाकुलकम् | १४ *श्रुतस्तव |
| १५* अध्यात्मगीतानि | १६ उत्सूत्रपदोद्घाटनकुलकम्। |

९ " सच्चरियाणमहीण **सुगुरूण पारततमुव्वहइ।**
जयउ **जिणदत्तसूरी** सिरिनिलओ पणयमुणितिलओ ॥ '

इत्यन्तिमगाथोपेतमेतन्नैकश प्रसिद्धम्। अस्य शतद्वयश्लोकप्रमाणा वृत्तिरप्युपलभ्यते। वृत्तिकारो जयसागरगणिरिति जैनग्रन्थावल्यामसूचि। तत्र च तद्वृत्तिरचनासमयो वि स १३६८ वषरूपो निर्दिष्टस्तिन्त्यो यतोऽत्र सम्भाव्यमानजयसागरस्य समयो विक्रमस्य पञ्चदशशताब्द्युत्तरार्ध-षोडशशताब्दीप्रारम्भरूप प्रामाणिक (जे भा सूच्यामप्रसिद्ध० पृ०५४ इत्यत्र विलोकनीयम्)

१० अप्रसिद्धैषा। अस्या नामोपात्त गणधरसार्धशतकबृहद्वृत्तौ। अत्र भूमिका (पृ ४४) द्रष्टव्या।

११ 'सिग्घमवहरउ' इत्यादिनाऽऽरब्धत्वात् तन्नाम्नैव विशेषत प्रसिद्धिमधिगतम्,
" **जिणदत्ताण** सम्म मन्नति कुणति जे उ कारति।
मणसा वयसा वउसा जयति साहम्मिया ते वि ॥
**जिणदत्तगुणेहि** नाणाइणो सया जे धरति धारति।
दसियसियवायपहे नमामि साहम्मिया ते वि ॥"

इत्यन्तिमपद्यसूचितस्वाभिधानमेतदपि स्मरणस्तोत्र नैकदा प्रकाशितम्। अस्य सक्षिप्ता वृत्तिरप्युपलभ्यते।

१२ १३, १४, १५ क्रमाङ्केषु सूचिता कृतिर्जेसलमेरुदुर्गे भाण्डागारपुस्तिकाया पठ्यते, किन्तु विशिष्टावलोकन विना नात्र किमपि तद्विषये स्पष्टीकर्तुं शक्यते। तथा च जैनग्रन्थावल्या जिनदत्त सूरिकृतित्वेन निर्दिष्टाऽपि पद्यावली न तथा, किन्तु सा कविपल्हप्रणीता जिनदत्तसूरिस्तुतिरित्यत्र (परि० ४) दर्शनेन प्रतीत भविष्यति पाठकानाम्।

नामसाम्याद् वायटीयगच्छीयजिनदत्तसूरिकृतस्यापि शकुनशास्त्रस्य गूर्जरभाषानुवादपुस्तिकायां प्रस्तुतजिनदत्तसूरिप्रतिकृति निवश्य प्रकारान्तरेणास्य सूरे कृति सा इत्यसूचि तदनुवादक प्रकाशकेन प हीरालाल, तथा च केचिन् तदरिनमत्र समिन्निम्, किन्तु तद् भ्रान्तिमूल प्रतीयते प्रेक्षावताम्।

* अप्रसिद्धमन्यस्तापकमेतदभिज्ञानम्।

## समकालीनसूरयः ।

प्रस्तुतजिनदत्तसूरि-जीवनसमये विक्रमस्य द्वादशशताब्द्या त्रयोदशशताब्द्याश्च प्रथमचरणे सत्ता बिभ्राणा प्रभूता प्रौढा सूरिपुङ्गवा समजनिषत, सूर्यैरिव यैर्जिन-प्रवचन-गगनाङ्गण स्वप्रतिभया प्राद्योति ।

तत्र च केषाञ्चिदुल्लेखोऽत्राजनि । तदितरेषा जिनभद्रसूरि-देवचन्द्रसूरि-देव भद्रसूरि-धनेश्वरसूरि-नन्नसूरि-पार्श्वदेवगणि (श्रीचन्द्रसूरि)-महेन्द्रसूरि-मुनिचन्द्र-सूरि-यशोदेवसूरि-यशोदेवोपाध्याय-रत्नप्रभसूरि-रामचन्द्रसूरि-रामदेवगणि-वर्धमा-नसूरि-शान्तिसूरि-सिद्धसूरि-हरिभद्रसूरि (१-२)-हेमचन्द्रसूरि (१-२) प्रभृतीना सक्षिप्तपरिचयस्त्वस्माभिरन्यत्र (जे भा सूच्याम्, अप्रसिद्ध०) अकारि ।

तथा चान्येषामाम्रदेवसूरि-चक्रेश्वरसूरि-चन्द्रप्रभसूरि-चन्द्रसेनसूरि-विजय सिंहसूरि(१-२)-श्रीचन्द्रसूरि-हेमचन्द्रसूरिप्रभृतीना परिचय प्रो० पिटर्सनादिसङ्कलि-तरिपोर्टपुस्तकादिपर्यवलोकनेन, वादिदेवसूरि-वीराचार्य-हेमचन्द्रसूरिप्रमुखाणां चरित प्रभावकचरितादिप्रेक्षणेन, लक्ष्मणगण्यादीना चापरेषा परिचयस्तत्तत्कृतिसुपार्श्वचरितादि-प्रशस्तिप्रान्तांशनिरीक्षणेनावगस्यते । केषाञ्चिच परिचय प्रकाश्यमानपत्तनायजैनभाण्डा-गारीयग्रन्थसूच्यादावपि प्रदर्शयिष्यत इति नेह तदर्थं प्रयत्यते ।

केवल जिनदत्तसूरेर्वादिदेवसूरि-हेमचन्द्रसूरिभ्या साक जन्म-दीक्षाऽऽदिसमय-स्थलादिविषयक समवक्तव्यमत्र कोष्ठके प्रदर्श्य सन्तुष्यते—

| | |
|---|---|
| ९ सुगुरुपारतन्त्र्यम् (प्रा) गा २१ | १० *विंशिका |
| ११ विघ्नविनाशिस्तोत्रम् (प्रा) गा १४ | १२ *उपदेशकुलकम् |
| १३* अवस्थाकुलकम् | १४ *श्रुतस्तव |
| १५* अध्यात्मगीतानि | १६ उत्सूत्रपदोद्घाटनकुलकम् । |

९ " सच्चरियाणमहीण **सुगुरूण पारततमुव्वहइ ।**
जयउ **जिणदत्तसूरी** सिरिनिलओ पणयमुणितिलओ ॥"

इत्यन्तिमगाथोपेतमेतदनेकश प्रसिद्धम् । अस्य शतद्वयश्लोकप्रमाणा वृत्तिरप्युपलभ्यते । वृत्तिकारो जयसागरगणिरिति जैनग्रन्थावल्यामसूचि । तत्र च तद्वृत्तिरचनासमयो वि स १३६८ वर्षरूपो निर्दिष्टश्चिन्त्यो यतोऽत्र सम्भाव्यमानजयसागरस्य समयो विक्रमस्य पञ्चदशशताब्द्युत्तरार्ध-षोडशशताब्दीप्रारम्भरूप प्रामाणिक (जे भा सूच्यामप्रसिद्ध० पृ०५४ इत्यत्र विलोकनीयम्)

१० अप्रसिद्धैषा । अस्या नामोपात्त गणधरसार्धशतकबृहद्वृत्तौ । अत्र भूमिका (पृ ४४) द्रष्टव्या ।

११ 'सिग्घमवहरउ' इत्यादिनाऽऽरब्धत्वात् तन्नाम्नैव विशेषत प्रसिद्धिमधिगतम्,

" **जिणदत्ताण** सम्म मनति कुणति जे उ कारति ।
मणसा वयसा वउसा जयति साहम्मिया ते वि ॥
**जिणदत्तगुणेहिं** नाणाइणो सया जे धरति धारति ।
दसियसियवायपहे नमामि साहम्मिया ते वि ॥"

इत्यन्तिमपद्यसूचितस्वाभिधानमेतदपि स्मरणस्तोत्र नैकदा प्रकाशितम् । अस्य सक्षिप्ता वृत्तिरप्युपलभ्यते ।

१२, १३, १४, १५ क्रमाङ्केषु सूचिता कृतिर्जेसलमेरुदुर्गे भाण्डागारपुस्तिकाया पठ्यते, किन्तु विशिष्टावलोकन विना नात्र किमपि तद्विषये स्पष्टीकर्तुं शक्यते । तथा च जैनग्रन्थावल्या जिनदत्तसूरिकृतित्वेन निर्दिष्टाऽपि पट्टावली न तथा, किन्तु सा कविपल्हप्रणीता जिनदत्तसूरिस्तुतिरित्यत्र (परि० ४) दर्शनेन प्रतीत भविष्यति पाठकानाम् ।

नामसाम्याद् वायटीयगच्छीयजिनदत्तसूरिकृतस्यापि शकुनशास्त्रस्य गूर्जरभाषानुवादपुस्तिकायां प्रस्तुतजिनदत्तसूरिप्रतिकृतिं निवेश्य प्रकारान्तरेणास्य सूरे कृति सा इत्यसूचि तदनुवादक प्रकाशकेन च हीरालालेन, तथा च केचिन् तथरितमत्र समिनितम् किन्तु तद् भ्रान्तिमूल प्रतीयते प्रेक्षावताम् ।

* अप्रसिद्धग्रन्थसूचापरमेतदभिज्ञानम् ।

---

## समकालीनसूरयः ।

प्रस्तुतजिनदत्तसूरि–जीवनसमये विक्रमस्य द्वादशशताब्द्या त्रयोदशशताब्द्याश्च प्रथमचरणे सत्ता बिभ्राणा प्रभूता प्रौढा सूरिपुङ्गवा समजनिषत, सूर्यैरिव यैर्जिन-प्रवचन–गगनाङ्गण स्वप्रतिभया प्राद्योति ।

तत्र च केषाञ्चिदुल्लेखोऽत्राजनि । तदितरेषा जिनभद्रसूरि–देवचन्द्रसूरि–देवभद्रसूरि–धनेश्वरसूरि–नन्नसूरि–पार्श्वदेवगणि (श्रीचन्द्रसूरि)–महेन्द्रसूरि–मुनिचन्द्र-सूरि–यशोदेवसूरि–यशोदेवोपाध्याय–रत्नप्रभसूरि–रामचन्द्रसूरि–रामदेवगणि–वर्धमा-नसूरि–शान्तिसूरि–सिद्धसूरि–हरिभद्रसूरि (१–२)–हेमचन्द्रसूरि (१–२) प्रभृतीना सक्षिप्तपरिचयस्त्वस्माभिरन्यत्र (जे भा सूच्याम्, अप्रसिद्ध०) अकारि ।

तथा चान्येषामाम्रदेवसूरि–चक्रेश्वरसूरि–चन्द्रप्रभसूरि–चन्द्रसेनसूरि–विजय-सिंहसूरि (१–२)–श्रीचन्द्रसूरि–हेमचन्द्रसूरिप्रभृतीना परिचय प्रो० पिटर्सनादिसङ्कलि-तरिपोर्टपुस्तकादिपर्यवलोकनेन, वादिदेवसूरि–वीराचार्य–हेमचन्द्रसूरिप्रमुखाणां चरित प्रभावकचरितादिप्रेक्षणेन, लक्ष्मणगण्यादीना चापरेषा परिचयस्तत्तत्कृतिसुपार्श्वचरितादि-प्रशस्तिप्रान्तांशनिरीक्षणेनावगम्यते । केषाञ्चिच्च परिचय प्रकाश्यमानपत्तनीयजैनभाण्डा-गारीयग्रन्थसूच्यादावपि प्रदर्शयिष्यत इति नेह तदर्थं प्रयत्यते ।

केवल जिनदत्तसूरेर्वादिदेवसूरि–हेमचन्द्रसूरिभ्या साक जन्म–दीक्षाऽऽदिसमय–स्थलादिविषयक समवक्तव्यमत्र कोष्ठके प्रदर्श्य सन्तुष्यते—

| | | जिनदत्तसूरेः | वादिदेवसूरेः | हेमचन्द्रसूरेः |
|---|---|---|---|---|
| १ | जन्मसंवत् | ११३२ | ११४३ | ११४५ |
| २ | जन्मस्थानम् | धवलकपुरम् (गूर्जरदेशे) | मद्दाहृतम् (गूर्जरदेशे) | धन्धूकपुरम् (गूर्जरदेशे) |
| ३ | जन्मनाम | ० | पूर्णचन्द्र | चङ्गदेव |
| ४ | ज्ञाति | क्षपणकभक्ता (हुबडवणिक्) | प्राग्वाटवणिक् | मोढवणिक् |
| ५ | पिता | वाछिग | वीरनाग | चच्च (चाच्चिग) |
| ६ | माता | बाहडदेवी | जिनदेवी | चाहिणी (पाहिनी) |
| ७ | दीक्षासंवत् | ११४१ | ११५२ | ११५० (४) |
| ८ | दीक्षानाम | सोमचन्द्र | रामचन्द्र | सोमचन्द्र |
| ९ | दीक्षागुरु | धर्मदेवोपाध्याय | मुनिचन्द्रसरि | देवचन्द्रसूरि |
| १० | गच्छनाम | विधिपथ (खरतर) | बहद् (वड) गच्छ | पूर्णतल्लगच्छ |
| ११ | सूरिपदसंवत् | ११६९ | ११७४ | ११६६ |
| १२ | परिचितनृप | अर्णोराज | सिद्धराज | ११५०-११९९ सिद्धराज-कुमारपालौ ११९९— |
| १३ | स्वर्गमनसंवत् | १२११ | १२२६ | १२२९ |
| १४ | स्वर्गमनस्थलम् | अजयमेरुदुर्ग | ० | अणहिलपाटक(पत्तन)म् |
| १५ | पट्टधर | जिनचन्द्रसूरि | भद्रेश्वरसूरि | रामचन्द्रसूरि |
| १६ | मुख्यकृतिनाम | गणधरसार्धशतकम् | स्याद्वादरत्नाकर | सिद्धहेमशब्दानुशासनम् |

## व्याख्याकार[1]

## ( १ )

### जिनपालोपाध्याय[2] ।

अपभ्रंशकाव्यत्रय्यन्तर्गतस्य चर्चर्युपदेशरसायनाख्यकाव्यद्वयस्य व्याख्यातुर्जिनपालस्य परिचितिरप्यत्रौचितीमञ्चति । विवृतिकर्त्राऽनेनैतद्न्ते निज जिनपतिसूरेः शिष्यत्व जिनेश्वरसूरेश्च निदेशवर्तित्व स्पष्ट पर्यचायि । एतयोर्जिनपालस्यापि च सक्षिप्तपरिचयस्त्वस्माभिरन्यत्राकारीति विशेषतो निवेदनीयमेवात्र निवेद्यते ।

जिनपति-जिनेश्वरसूरिद्वयस्यापि प्रशस्तगुणगणप्रशस्ति प्रचकाशे तत्परम्पराजातैस्तच्छिष्य-प्रशिष्यप्रभृतिभि , परन्तु भूमिकाया अतिविस्तारभयात् तत्प्रदर्शने नोत्सहे, केवल प्रस्तुतव्याख्याकारगुरोर्जिनपतिसूरेः परिचितिं किञ्चिदुद्धरामि । तथाहि—

वि स १२८९ वर्षे जिनपतिसूरिशिष्य पूर्णभद्रगणि —

" यैर्वादीन्द्रकरीन्द्रदर्पदलने सिंहैरिव स्फूर्जित
मोहध्वान्तविनाशने भुवि सदा सूर्यैरिवोज्जृम्भितम् ।
भव्यप्राणिसमूहकैरववने चन्द्रैरिवेहोद्गत
ते श्रीमज्जिनपत्यभिख्यगुरवोऽभूवन् यतीशोत्तमा ॥"

—धन्य-शालिभद्रचरित्रे (प्रश० श्लो० ८)

वि स १२९३ वर्षे प्रस्तुतो जिनपालोपाध्याय —

" नानासद्वादकेलीविदलितनिखिलस्मानशैल परेषा
रेखां य प्राप विद्वत्स्वनितरसुलभां सर्वविद्यावतस ।
दृष्टान्तत्व चरित्रिष्वलभत कुमतध्वान्तविध्वसहस
स श्रीमान् सूरिराजो जिनपतिरभवत् तत्पदालङ्करिष्णु ॥"

—द्वादशकुलकविवरणे ( प्रश० श्लो० ९ )

---

१ जसलमेरुभा० सूच्याम् ( अप्रसिद्ध० पृ २८, ३६, ४०, ४१ नामसूची )

२ तत्पदेनात्राग्रेऽपि चोपरिपरिचायितजिनदत्तसूरे पट्टधरो जिनचन्द्रसूरिर्विज्ञेय , यस्य जन्म वि स ११९७ वर्षे सूरिपद वि स १२११ वर्षे, स्वर्गमन च वि स १२२३ वर्षे खरतरगच्छपट्टावल्यादितो ज्ञायते ।

| | | जिनदत्तसूरेः | वादिदेवसूरेः | हेमचन्द्रसूरेः |
|---|---|---|---|---|
| १ | जन्मसंवत् | ११३२ | ११४३ | ११४५ |
| २ | जन्मस्थानम् | धवल्लक्कपुरम् (गूर्जरदेशे) | मड्डाहृतम् (गूर्जरदेशे) | धन्धूक्पुरम् (गूर्जरदेशे) |
| ३ | जन्मनाम | ० | पूर्णचन्द्र | चङ्गदेव |
| ४ | ज्ञाति | क्षपणकभक्ता (हुम्बडवणिक्) | प्राग्वाटवणिक् | मोढवणिक् |
| ५ | पिता | वाछिग | वीरनाग | चच्च (चाच्चिग) |
| ६ | माता | बाहडदेवी | जिनदेवी | चाहिणी (पाहिनी) |
| ७ | दीक्षासंवत् | ११४१ | ११५२ | ११५० (४) |
| ८ | दीक्षानाम | सोमचन्द्र | रामचन्द्र | सोमचन्द्र |
| ९ | दीक्षागुरु | धर्मदेवोपाध्याय | मुनिचन्द्रसरि | देवचन्द्रसूरि |
| १० | गच्छनाम | विधिपथ (खरतर) | बहद् (वड) गच्छ | पूर्णतल्लगच्छ |
| ११ | सूरिपदप्राप्ति | ११६९ | ११७४ | ११६६ |
| १२ | प्रतिबोधितनृप | अर्णोराज | सिद्धराज | ११५०-११९९ सिद्धराज-कुमारपालौ ११९९– |
| १३ | स्वर्गगमनसंवत् | १२११ | १२२६ | १२२९ |
| १४ | स्वर्गगमनस्थलम् | अजयमेरुदुर्गे | ० | अणहिलपाटक(पत्तन)म् |
| १५ | पट्टधर | जिनचन्द्रसूरि | भद्रेश्वरसूरि | रामचन्द्रसूरि |
| १६ | मुख्यकृतिनाम | गणधरसार्धशतकम् | स्याद्वादरत्नाकर | सिद्धहेमशब्दानुशासनम् |

सिद्धान्ताम्बुधिकुम्भसम्भवसमः साहित्यलक्ष्मीप्रियः
पान्थो व्याकरणाटवीषु तिलको यस्तार्किकाणां व्रजे ।
वादीन्द्रद्विपभेदपञ्चवदने काव्यं महार्थं वरं
यस्मिन् कुर्वति भङ्गिभिर्जडतया माघोऽपि माघायते ॥

यश्चाद्यसहननकाय इवाधिसेहे
गाढोपसर्गभरमस्पृह एव देहे ।
आदाय शोभिमधिपोऽपि च योऽत्र षट् षण्-
मासान् परं च विकृतीर्बहुशो मुमोच ॥

छन्दो–लक्षण–तर्कशास्त्रविविधालङ्कारविस्कोविदे
पृथ्वीराजसभे कुतूहलगृहे श्रीगूर्जरत्रावनौ ।
तर्कन्यायवरोपपत्तिसहितैः सिद्धान्तवाक्यैस्तथा
तत्त्वं प्रोच्य महातले विधिपथं प्रोत्सर्पयामास यः ॥"

—अभयकुमारचरिते (प्रश० श्लो० १६–१९)

वि० सं० १३१७ वर्षे जिनेश्वरसूरिशिष्यो लक्ष्मीतिलकोपाध्यायः —

"येनामुद्यन्त सद्यः प्रतिनपतिसभं वादिनां वक्त्रगेहा
उन्मुद्राणि त्वभूवंस्तदपमलयशोगातिकोलाहलेन ।
अन्यो(न्यो)न्याशाङ्गनानां शिवपदकमलाकार्मणं यश्च मुद्रां
गच्छस्यादत्त सोऽभूज्जिनपतिजिनराट् तत्कपट्टेऽभिषिक्तः ॥"

—श्रावकधर्मप्रकरणवृत्तौ (प्रश० श्लो० ७)

वि० सं० १३२० वर्षे जिनेश्वरसूरिशिष्यः प्रबोधचन्द्रगणिः —

"येषां गीर्वाणवाणीलहरिभिरभितः प्लूयमाणाऽखिलाऽपि
श्रीपृथ्वीराजपृथ्वीपतिसमितिरिहाश्चर्यसिन्धौ ममज्ज ।
चित्रं तत्रापि शत्रोर्वपुषि ववृधिरे तर्ष–मालिन्य–तापाः
पापानां वा किमेतज्जिनपतिगुरवस्तेऽत्र पट्टे बभूवुः ॥"

—सन्देहदोलावलिबृहद्वृत्तौ ।

वि० सं० १३२६ (?) वर्षे सद्दपुरजिनालयशिलालेखे—

"ततो जिनपतिः प्रभुर्गुरुरनतसच्चूडामणि—

वि स १२९९ वर्षे जिनपतिसूरिशिष्य सुमतिगणि —

" तस्याभूद् भूपमूर्ध्नोद्भटमुकुटतटीकोटिघृष्टाङ्घ्रिपद्म
शिष्य शस्यो बुधैर्वैर्जिनपतिरिति सन्नामत सूरिरुच्चै ।
निख्यात क्षोणिपीठे सुविहितयतिराट्[राज]चक्राधिनाथ—
श्छन्दोऽलङ्कार—तर्कप्रमुखनिखिलसद्ग्रन्थविस्तारितार्थ ॥
प्रतिदिनमपि सिद्धिप्रेयसासङ्गसौख्या—
नुगतनवकथास्वाक्षिप्तचित्त निरीक्ष्य ।
क्षणमपि दयित न ज्ञान—चारित्रलक्ष्म्यौ
मुमुचतुरुदितात्म[जात]मीत्येव य च ॥ "

—गणधरसार्धशतक—बृहद्वृत्तौ ( प्रश० )

वि स १३०७ वर्षे जिनेश्वरसूरिशिष्य पूर्णकलशगणि —

" विज्ञा केचन लक्षणेऽथ कतिचित् तर्के परेऽप्यागमे
काव्येऽन्ये च समग्रशास्त्रचतुरा प्रायेण नामून् विना ।
व्यक्तु नूनमिद विधिर्बहुविधै शास्त्रैर्विजाप्यासमान्
प्राज्ञान् राजसमास्वलम्भयदतो यान् जैत्रपत्राण्यरम् ॥
भृङ्गायमाणपदपुष्कर‌राजहसा
वर्ण—प्रतापजितपुष्कर‌राजहसा ।
श्रीजैनचन्द्रपदपङ्कजराजहसा—
स्ते जज्ञिरे जिनपतिप्रभवोऽन्त्र( थ ) हसा ॥"

—प्राकृतद्व्याश्रयवृत्तौ ( प्रश० श्लो० ३, ४ )

वि सं १३१२ वर्षे जिनेश्वरसूरिशिष्योऽभयतिलकगणि —

" आरद्य क्षितिभृत्समाचतुरिका निर्जित्य दुर्वादिन—
स्तेजोऽग्नौ ज्वलिते लसत्यनुदिश नादे यशोद्द्रुमे ।
पाणौकृत्य जयश्रियो गुरुमहैर्य भारदा मातर
पृथ्वी चोन्मुदिता व्यधाज्जिनपति सूरि स जज्ञे तत ॥"

—स द्व्याश्रयवृत्तौ ( प्रश० श्लो० ७ )

वि सं १३१२ वर्षे जिनेश्वरसूरिशिष्यलक्ष्मीतिलकोपाध्याय —

" तस्ये श्रीजिनपतिसूरिजोऽथ पञ्चलिङ्गी य
र्थमहद्ग्रहपञ्च विवरन घने शुभस्थयम् ॥

इत्थ चास्य कृतिक्रम परिज्ञायते—

वि स १२६२ वर्षे पट्स्थानक-वृत्ति ।
सनत्कुमारचक्रिचरित सटीक महाकाव्यम् ।
वि स १२९२ वर्षे उपदेशरसायन-विवरणम् ।
वि स १२९३ वर्षे द्वादशकुलक-विवरणम् ।
" " पञ्चलिङ्गीविवरण-टिप्पनम् ।
वि स १२९४ वर्षे चर्चरी-विवरणम् ।
अज्ञातरचनासमय स्वप्नविचार-भाष्यादि ।

वि स १२९५ वर्षे जिनदत्तसूरीयगणधरसार्धशतकस्य बृहद्वृत्तिकर्ता सुमतिगणि समकालीन स्वसतीर्थ्यमेत जिनपालोपाध्यायमित्थ स्मरति स्म—

" नानातर्क-वितर्क-कर्कशलसद्वाणीकृपाणीस्फुरत्—
तेज प्रौढतरप्रहारघटनानिष्पिष्टवादिव्रजा ।
श्रीजैनागमतत्त्वभावितधिय प्रीतिप्रसन्नानना
स तु श्रीजिनपाल इत्यलमुपाध्याया: क्षितौ विश्रुता ॥
नानाऽलङ्कारसार रचितकृतबुधाश्चर्यचित्रप्रकार
नानाच्छन्दोऽभिराम नगरमुखमहावर्णकाव्यप्रकामम् ।
दृब्ध काव्य सटीक सकलकविगुण तुर्यचक्रेश्वरस्य
क्षिप्र यैस्तेऽभिषेका प्रथमजिनपदाश्लिष्टपाला मुदे न ॥"

—गणधरसार्धशतकबृहद्वृत्तौ ( प्र० श्लो १९, ११ )

चन्द्रतिलकोपाध्यायेनाहङ्कारिवादिविजेतुरस्मादेव जिनपालोपाध्यायाद् नन्द्याद्यागम-वाचनोपादायि । वि स १३१२ वर्षे रचित नवसहस्रश्लोकपरिमितमभयकुमारचरित्र मपि तेनास्यैव जिनपालोपाध्यायस्य प्रेरणया व्यरचीति तत्प्रान्ते व्यक्तीचक्रे—

" भूयोभूमिभुजङ्गससदि मनोनानन्दविप्र घना-
हङ्कारोद्धुरकन्धर मुनिदुर पत्रावलम्बप्रदम् ।
जित्वा वादमहोत्सवे पुरि बृहद्द्वारे प्रदत्तोच्चक-
र्युक्ती सद्वयुत गुरु जिनपति यस्तोपयामासिवान् ॥

जिनाधिपतिशासन समुदनीनमत् समना ।
समग्रगुणमालिकासमतियातस्तर्यावले–
र्व्यलोक्यततरामहो किमपि वैशिष्ट्यमृत् ॥
यस्मिन् परिपहचमूभरससहिष्णौ
नानोपसर्गपटलीं विकटा विजिष्णौ ।
ऊर्जत्तप श्रियि परोपकृतिप्रवीणे
श्रीवीरनाथजिनता प्रथयति धया ॥"

—वीजापुरवृत्तान्ते ।

वि स १३८३ वर्षे जिनकुशलसूरि —

"अत एव श्रीआशापल्या पूर्वसैद्धान्तिकचक्रचूडामणिभिर्वादीन्द्रद्विपदघटाविद्रावणकेसरिभिर्निरछद्मशुद्धक्रियाकारिभि श्रीजिनपतिसूरिभि श्रीप्रद्युम्नसूरिभि सहायतनानायतननाद कुर्वाणै सकलाचार्यचक्रप्रत्यक्षमोघनिर्युक्त्यादिसिद्धान्तानुसारेण सविस्तरमायतन सस्थाप्यानायतन निराचक्रे ।"

तथा—

"दृष्ट्वा मोहव्यपोह निदधत इह यान् मोहकर्त्रीं स्वका तां
श्यामा ज्ञात्वा च चन्द्रस्तदुपहतिभिया ता तनूकृत्य नूनम् ।
क्रोडीचक्रे कलङ्क छलत उडुवृतो व्योम्नि शून्येऽभ्रमच्च
श्रीमन्तस्तत्कपट्टे जिनपतिगुरवस्ते चकासाम्बभूवु ॥"

—चैत्यवन्दनकुलकवृत्तौ ( पृ ९१, प्रश० श्लो० ४ )

जिनपतिसूरिसत्का कतिचित् पुस्तिका उपलभ्यन्तेऽद्यापि जेसलमेरुभाण्डागारादौ। एव प्रस्तुतस्य प्रौढविदुषो वादिविजेतुस्तस्य जिनपतिसूरे शिष्योऽय जिनपालोपाध्याय ।

जिनपालस्य जन्म–दीक्षाऽऽदिसमय सम्यग् नावबुध्यते, तथापि षट्स्थानकवृत्तिस्तेन वि स १२६२ वर्षे विहिता विज्ञायत इति तत पूर्व विक्रमस्य त्रयोदशशताब्द्या पूर्वार्धे वाऽनुमीयमान स दोषावहो न प्रतिभाति । अनेनोपदेशरसायनविवरणरचना युग–नव–रविप्रमिते वर्षे, चर्चरीविवृतिरचना च वेद–ग्रह–रविवर्षेऽकारीति स्पष्ट समसूचि । चर्चरी( गा १२ )विवृतौ निज रसायनविवरणमस्मारि । युगशब्देन द्विकसङ्ख्याग्रहणमपि कर्तु शक्यत इति विचार्यमाणे चर्चरीविवरणात् प्राग् रसायनविवरणप्रादुर्भाव प्रतिभासते ।

---

१ [illegible] ( [illegible] पृ० २८ )

सूरप्रभाभिषेका विवेकसेकातिरेकतश्छेका ।
प्रपुनन्तु श्रीमन्तस्ते मच्चित्त सुधीमन्त ॥ "

—गणधरसार्धशतकबृहद्वृत्तौ ( श्लो० १७, १८ )

जिनपालोपाध्यायसतीर्थ्येनानेन सूरप्रभोपाध्यायेन स्तम्भतीर्थनगरे दिगम्बर-वादियमदण्डो विजित । चन्द्रतिलकोपाध्यायोऽस्य पार्श्वे विद्यानन्द पठितवान्, यो वि स १३१२ वर्षेऽभयकुमारचरित व्यरचयत्—

" सूरिं जिनेश्वरगुरु जिनतीर्थयात्राऽभ्यायातसङ्घसहित समरञ्जयद् य ।
श्रीस्तम्भतीर्थनगरे वरजल्पकेलौ निर्जित्य वादियमदण्डदिगम्बरेशम् ॥
स श्रीसूरप्रभसमभिधो बुद्धिधामाभिषेको
ज्ञाता नाम स्वमिव निखिला लक्षणाद्याश्च विद्या ।
स्फायज्ज्यायस्त्वरितकवितानिर्मितौ ब्रह्मकल्पो
विद्यानन्द शिशुमिव भृश हेलयाऽमाणयन्माम् ॥ "

—अभयकुमारचरिते ( प्रश० श्लो ३०, ३१ )

अस्य विदुषोऽन्या कृतिं परिचितिं वा नैवोपलब्धुमपारयामिति विरमामि ।



सम्यगध्याप्य निष्पाद्य यश्चा तेवासिनो बहून् । चक्रे कुम्भ—ध्वजारोप गच्छ—प्रासादमूर्धनि ॥
श्रीजिनपालोपाध्यायमौलेस्तस्यास्य सन्निधौ । मयोपादायि नन्द्यादिमूलागमाङ्गवाचना ॥

× × ×

श्रीजिनपालोपाध्यायकर्ता त्रि प्रेरणामहम् । चरित्रकरणे प्राप सरस्वत्युपदेशवत् ॥
सुशकुनमिवास्मि त म नो द्धिमान्वित । काव्याभ्यासविहीनोऽपि व्यधा काव्यमिद तत ॥"

—अभयकुमारचरित्रे ( प्रश० ३७-४२ )

वि स १३२० वर्षे सन्देहदोलावलिवृत्तिकर्ता प्रबोधच द्रगणिश्चैन—मेव जिनपालोपा याय निजमागमगुरुमभ्यजिज्ञपत्—

" नृपसमिति विजितविविधप्रतिवादिवितीर्णजयपताकाऽऽढ्या ।
जिनपालोपा याया आसन् यस्यागमे गुरव ॥"—स देहदोलावलिवृत्तौ (प्रश०)

**जिनपालस्य सतीर्थ्या'** ।

( १ ) **जिनेश्वरसूरिः**—जिनपतिसूरेरय पट्टधर , अस्य परिचितिरुपरि समसूचि ।
( २ ) **पूर्णभद्रगणिः**—अस्य परिचयोऽकारि जेसलमेरुभा०सूच्याम् ( पृ ४९ )
( ३ ) **सुमतिगणिः**—परिचायितोऽय जेसलमेरुभा०सूच्याम् (अप्रसिद्ध० पृ ६०)
( ४ ) **सूरप्रभोपाध्याय** —अस्य परिचयोऽग्रे कार्यते ।

---

( २ )

**सूरप्रभोपाध्यायः** ।

अपभ्रशकाव्यत्रय्य तर्गताया काव्यस्वरूपकुलकसंज्ञिकाया द्वात्रिंशिकाया वृत्तिकारो जिनपतिसूरिशिष्योऽय स एवाभिज्ञायते, येन वि स १२८९ वर्षे पूर्णभद्रगणिरचित धन्य—शालिभद्रचरित समशोधि—

" चरितमिदमखिल निर्मलविद्याकूपारपारदृश्वान ।
वाचकमुख्या **सूरप्रभा**भिधा शोधयाचक्रु ॥"—जेसलमेरुभा०सूची ।

वि स १२९५ वर्षे गणधरसार्धशतक—बृहद्वृत्तिकार' सुमतिगणिर्निज सतीर्थ्यमेनमित्यमुपाश्लोकयत्—

" यद्वक्त्राम्भोज—रङ्गाङ्गणभुवि भुवि नामोगमर्हप्रबन्धा
नानाच्छन्द प्रब धै रचितबुधमनश्चित्रचित्रप्रपञ्चा ।
नैर्गुण्यानकानप्रकटन रैकटोपाप्प्रचारा
श्यामा नर्तकीव प्रागमममिगम स्ताद्दप्रप्रकाश ॥

इति नाम्ना पप्रथे। कालक्रमेण वैयाकरणाना कृपया अपभ्रंशभाषासंज्ञयाऽपि प्रसिद्धिं प्राप। तानपि वैयाकरणनिबद्धानपभ्रंशभाषानियमानुल्लङ्घ्य प्रकृतिप्रवर्तमानो विविधजनपदभाषाव्यवहार सामान्यसंज्ञया 'प्राकृत' 'अपभ्रंश' इत्युच्यमानोऽपि विशिष्टतया तत्तद्देशभाषानाम्ना प्रसिद्धिं जगाहे। एव विचार्यमाणे कथञ्चिद् भेदेनापभ्रंशनामधेयेऽपि प्राकृताङ्गभूतत्वात् तेनातीवसाम्याच्च 'प्राकृतमेवापभ्रंश' इति वचन नानुचित प्रतिभाति।

**प्राकृतस्य सत्कार** जिनवरै प्राकृतभाषा सरला सुगमा स्त्री–बाल–मन्दादिसर्वजनोपकृतिसमर्था च विचार्य निजसिद्धान्तोऽनेतस्तदद्वारैव प्रकाशित। एतदर्थसवादिकामिमामार्षामागमादुद्धृत्य प्रादर्शयद् वर्धमानसूरि —

"मुत्तूण दिट्ठिवाय कालिय–उक्कालियंगसिद्धंत।
थी–बालवायणत्थ पाईअ(यय)मुइय जिणवरेहिं॥"–आचारदिनकरे [उ १९]

जिनवरैरिव तदनुचरैस्तत्त्वज्ञगणधरैरपि तथैव तद्विशेषोपकारितामवधार्य तत्रैव सूत्रतो जैनसिद्धान्तरचनाऽकारि। समुपलभ्यन्ते चैतत्समर्थका नैकश सवादा —

"बाल–स्त्री–मूढ( मन्द )–मूर्खाणा नृणा चारित्रकाङ्क्षिणाम्।
अनुग्रहार्थं तत्त्वज्ञै सिद्धान्त प्राकृतः स्मृ(कृ)त॥"

उद्ध्रियते स्मेद पद्य दशवैकालिकटीकाया [प १०१] हरिभद्रसूरिणा, काव्यानुशासनटीकाया हेमचन्द्राचार्येण, तथा चान्यत्रान्यैरपि। जैनसिद्धान्तव्याख्यातृभिर्हरिभद्रसूरि–शीलाङ्काचार्याभयदेवसूरि–हेमचन्द्रसूरि–श्रीचन्द्रसूरि–मलयगिरिप्रभृतिभि सूत्रपद–शब्दशुद्धिसिद्धिसूचनेऽसकृत् प्राकृतशैल्या प्राकृतलक्षणात् प्राकृतत्वाद् वेत्थमित्याद्युच्चारितम्।

राजशेखरसूरि स० १३८७ वर्षेऽनुवदति स्मेत्य पूर्वपद्यम्—

"बाल–स्त्र्यादिजडप्रायभव्यजन्तुहितेच्छया।
प्राकृतागमकर्तृभ्यो गणभृद्भ्यो नमो नम॥"—प्राकृतद्व्याश्रयवृत्तौ।

---

१ मुक्त्वा दृष्टिवाद कालिकोत्कालिकाङ्गसिद्धान्तम्। स्त्री–बालवाचनार्थ प्राकृतमुदित जिनवरै॥

२ 'प्राकृतशैल्या बहुवचनम्, प्राकृतशैल्या चतुर्थ्यर्थे षष्ठी। उक्त च—

"दुव्वयणे बहुवयण छट्ठीविहत्तीएँ भण्णइ चउत्थी।
जह हत्था तह पाया णमो त्थु देवाहिदेवाण॥"

"सप्तम्यन्तता चास्य–' ए होति अयारंते पयमि बिइयाए बहुसु पुल्लिंग।
तइयासु छट्ठी–सत्तमीण एगमि महिलत्थे॥

अस्माल्लक्षणात् सिध्यति, एवमन्यत्रापि प्राकृतशैल्या इष्टविभक्त्यन्तता पदानामवगन्तव्येति।"

—आवश्यकसूत्रवृत्तौ, दशवैकालिकसूत्रवृत्तौ च ( आ समितिप्र॰ पृ ११, १२, १ )

हरिभद्रसूरि।

# अपभ्रंशभाषा।

भाषाभेदविवेचकैर्भाषासमुपासकैः संस्कृतशाब्दिकैरितरैश्च प्राज्ञैर्यस्या अपभ्रंश इति नाम परिकल्पितम्, कैश्चिच्च संस्कृतादपभ्रष्टेयमित्यादि यद्विषये प्रोद्घोषितम्, तस्याः सर्वसाधारणजनोपकारिण्या वर्तमानानां भारतवर्षीयाणां प्रायोऽशेषार्यदेशभाषाणां जननीरूपायाः प्राकृतापभ्रंशभाषाया विषये वक्तव्यमत्र प्रकाश्यते।

प्रसिद्धमहर्षिपतञ्जलिना प्ररूपितं खल्वेतत् पाणिनीयमहाभाष्ये [ १, १, १ ] शब्दापशब्दानामनुशासनविचारे—"भूयांसोऽपशब्दाः, अल्पीयांसः शब्दाः। एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः, तद्यथा गौरित्यस्य शब्दस्य गावी गोणी गोता गोपोतलिका इत्येवमादयोऽपभ्रंशाः।" एतावता च प्रकारान्तरेण प्रख्यापितं प्राकृतशब्दानामेवापभ्रंशत्वं प्राचुर्यं च, यतस्त एव गावी–गोणी–प्रभृतयः शब्दाः प्राचीनजैनसिद्धान्तपुस्तकेषु बहुशः प्रयुक्ता दृश्यन्ते[1], चण्ड–हेमचन्द्रादिभिर्वैयाकरणैश्च निजे प्राकृतलक्षणे तेषां शब्दानां शुद्धता च निरदेशि[2]।

अपभ्रंशस्य प्राकृते समावेशः

तथा चापभ्रंशस्य लक्षणं प्रादर्शि काविदण्डिना—

"आभीरादिगिरः काव्येष्वपभ्रंश इति स्मृताः।
शास्त्रे तु संस्कृतादन्यदपभ्रंशतयोदितम्॥"—काव्यादर्शे [ १, ३६ ]

वि. सं. ११२५ वर्षे नमिसाधुश्च निर्दिशति स्म—

'तथा प्राकृतमेवापभ्रंशः'—रुद्रटीयकाव्यालङ्कारस्य टिप्पने [ २, १२ ]

संस्कृतवैयाकरणैः संस्कृतशब्दानुशासनसिद्धान्तात् संस्कृतादतिरिक्तं सर्वमप्यपभ्रंशमिति व्याहृतम्, तथ प्रकृतिभव प्राकृतमिति प्राकृतवैयाकरणैर्नियमितम्। एवं व्याकरणवेलया नियन्त्रितेऽपि प्राकृतजनभाषाव्यवहारस्त्वनपेक्ष्य शब्दशास्त्रनियमान् यथेष्टं स्वच्छन्दं प्रावर्तत, न च नियन्त्रणमधिसेहेऽत एव स विद्वधानां प्रसादेन 'अपभ्रंश'

---

१ खीरीणियाओ गावीओ, गोणं वियालं'—आचाराङ्गे [ श्रु० २, उ० ४, ५ ]
'गावीए पुण दिण्णं तण पि गीरत्तणमुवइ।'—आवश्यकचूर्णौ।
'गोणीण सगेल'—व्यवहारसूत्रे [ उ० ४ ]
'[illegible] गोणी सुबा०', 'गोणी पट्टकंपा०'—आव० नि० [ गा० ११३ १३६ ]
'एत्थ गोणीए ठिओ। अन्नगुणा उ गोणी। गोणिगणिच्छो उ गुरु।
—दशवैकालिकचूर्णौ [ ? ५ ] हरिभद्रसूरिकृत [illegible]।

२ 'गावी'—चण्डकृत प्राकृतलक्षणे [ २, १६ ]
'गोणादयः'—सिद्धहेमशब्दानुशासने [ ८, २, १७४ ]

इति नाम्ना पप्रथे । कालक्रमेण वैयाकरणाना कृपया-अपभ्रशभाषासज्ञयाऽपि प्रसिद्धिं प्राप । तानपि वैयाकरणनिबद्धानपभ्रशभाषानियमानुल्लङ्घ्य-प्रकृतिप्रवर्तमानो विविध-जनपदभाषाव्यवहार सामान्यसज्ञया ' प्राकृत ' ' अपभ्रश ' इत्युच्यमानोऽपि विशिष्टतया तत्तद्देशभाषानाम्ना प्रसिद्धिं जगाहे । एव विचार्यमाणे कथञ्चिद् भेदेनापभ्रशनामधेयेऽपि प्राकृताङ्गभूतत्वात् तेनातीवसाम्याच्च 'प्राकृतमेवापभ्रश ' इति वचन नानुचित प्रतिभाति।

**प्राकृतस्य सत्कार** जिनवरै प्राकृतभाषा सरला सुगमा स्त्री–बाल–मन्दादिसर्वजनोपकृतिसमर्था च विचार्य निजसिद्धान्तोऽस्तस्तदद्वारैव प्रकाशित । एतदर्थ-सवादिकामिमामार्यामागमादुद्धृत्य प्रादर्शयद् वर्धमानसूरि —

" मुत्तूण दिट्ठिवाय कालिय–उक्कालियगसिद्धत ।
थी–बालवायणत्थ पाईअ(यय)मुइय जिणवरेहिं ॥"–आचारदिनकरे [उ १९]

जिनवरैरिव तदनुचरैस्तत्रत्रगणधरैरपि तथैव तद्विशेषोपकारितामवधार्य तत्रैव सूत्रतो जैनसिद्धान्तरचनाऽकारि । समुपलभ्यन्ते चैतत्समर्थका नैकश सवादा —

" बाल–स्त्री–मूढ( मन्द )–मूर्खाणा नृणा चारित्रकाङ्क्षिणाम् ।
अनुग्रहार्थ तत्त्वज्ञै सिद्धान्त **प्राकृतः** स्मृ(कृ)त ॥ "

उद्ध्रियते स्मेद पद्य दशवैकालिकटीकाया [प १०१] हरिभद्रसूरिणा, काव्यानुशासनटीकाया हेमचन्द्राचार्येण, तथा चान्यत्रान्यैरपि । जेनसिद्धान्तव्याख्यातृभिर्हरिभद्रसूरि–शीलाङ्काचार्याभयदेवसूरि–हेमचन्द्रसूरि–श्रीचन्द्रसूरि–मलयगिरिप्रभृतिभि सूत्रपद–शब्दशुद्धिसिद्धिसूचनेऽसकृत् प्राकृतशैल्या प्राकृतलक्षणात् प्राकृतत्वाद् वेत्थमित्याद्युच्चारितम्[२] ।

राजशेखरसूरि स० १३८७ वर्षेऽनुवदति स्मेत्थ पूर्वपद्यम्—

" बाल–स्त्र्यादिजडप्रायभव्यजन्तुहितेच्छया ।
**प्राकृतागमकर्तृभ्यो** गणभृद्भ्यो नमो नम ॥"—प्राकृतद्व्याश्रयवृत्तौ ।

---

१ मुक्त्वा दृष्टिवाद कालिकोत्कालिकाङ्गसिद्धान्तम् । स्त्री–बालवाचनार्थ **प्राकृतमुदित** जिनवरै ॥

२ ' **प्राकृत**शैल्या बहुवचनम् , **प्राकृत**शैल्या चतुर्थ्यर्थे षष्ठी । उक्त च—

" दुव्वयणे बहुवयण छट्ठीविहत्तीएँ भण्णइ चउत्थी ।
जह हत्था तह पाया णमो त्थु देवाहिदेवाण ॥"

"सप्तम्यन्तता चास्य–' ए होति अयारंते पयमि बिइयाए बहुसु पुल्लिंग ।
तइयासु छट्ठी–सत्तमीण एगमि महिलत्ये ॥

अस्माल्लक्षणात् सिध्यति एवमन्यत्रापि **प्राकृत**शैल्या इष्टविभक्त्यन्तता पदानामवगन्तव्येति ।"

—आवश्यकसूत्रवृत्तौ, दशवैकालिकसूत्रवृत्तौ च ( आ समितिप्र० पृ ११, ३२, १ )
हरिभद्रसूरि ।

विक्रमादित्यसत्कृतस्तत्समकालीन सिद्धसेनदिवाकर प्राकृत जिनशासनमिति लोकोक्त्या लज्जमान सस्कृतसिद्धान्तकरणार्थं सङ्घ व्यज्ञपयत्, किं तु सङ्घेन तदनुचित निचार्य प्राकृतसिद्धान्तद्वारैव बालादिमर्त्यजनस्य परमोपकृतिं निश्चित्य तादृक्चि तनेनापि परमगम्भीरसदाशयाना सुज्ञानिना प्राकृतसिद्धा तप्रणेतॄणा तीर्थकृद्--गणधरादीनामप-मानन वितर्क्य भविष्यल्लोकशिक्षणायापि प्रबल प्रायश्चित्त तस्मै व्यतारीत्यपि श्रूयते[1]

जैनसिद्धा ते भणितिद्वय सस्कृता प्राकृता चेत्यभाणि---

भाषाद्वये प्राकृतस्थानम् " सँक्कता पागता चेव दुहा भणितीओ आहिया।
सरमडलमि गिज्जते पसत्था इसिभासिता॥"[2]

---स्थानाङ्गसूत्रे ( आ समितिप्र० पृ ३९४ )

" सँकया पायया चेव भणिइओ होंति दोण्णि वा।"[3]

---अनुयोगद्वारसूत्रे ( आ समितिप्र० पृ १३१ )

" सक्कय-पाययवयणाण विभासा जत्थ जुजते ज तु।"[4]

---बृहत्कल्पभाष्ये ( लि वृत्तिप ९)

वि॰ स ९६२ वर्षे सिद्धर्षि प्रकाशयतीत्थ हार्दम्---

---

१ भद्रेश्वरसूरि --- 'उज्जेणीए नयरीए महावाई महाकवी य सिद्धि( द्ध )सेणो नाम साहू। सो य कयाइ जतो बाहिं दिट्ठो विक्कमाइच्चराएण चितिउ( य ) च--न जाणामि इमेसिं केरिसो आसीवाउ त्ति। कओ से दिट्ठिप्पणामो। लक्खिउ च तब्भावमुब्भवियहत्थेण सिद्धसे[ णे ]ण दिट्ठो(ण्णो) महासद्दर्ण धम्मलाभो। राएण छत्तत्तणारज्जिएण दवाविया से दव्वकोडी। भणिय च कराvi रायपारिग्गहिएण विक्कमाइच्चस्स वायपट्टिईए---

धम्मलाभो त्ति भुत्तम्मि दूरादुस्सियपाणिणो।
साहुणो सिद्धसेणस्स दहो कोडिं निवाहिवो॥

निवेइया य सा रायदिण्णा दि( द )व्वकोडी सिद्धसेणेण गुरुस्स। तेणावि सघस्स। सघेणावि कओ वीए साहारणसमुग्गओ। लज्जतो य पायय निग्गमासण ति लोउत्तीए सिद्धसेण-( णो ) विण्णवइ सघ--' जइ भणइ तो करमि सक्कय पि सिद्धत '। सघो भण,--" चितिएणावि इमेण पायच्छित्ती, किं पुण जपिएण, ता चरसु तुम पायच्छित्त॥"

---कथावल्याम् (पत्तनस्था ताडपत्रीया प्रति पृ ३००)

२ सस्कृता प्राकृता चैव द्विधा भणिती आख्याते।
स्वरमण्डले गीयमाने प्रशस्ता ऋषिभाषिता॥

३ सस्कृता प्राकृता चैव भणिती भवतो द्वे वा।

४ संस्कृत-प्राकृतवचनानां विभाषा यत्र युज्यते यत् तु।

५ "सस्कृतप्राकृतभाषे द्विविधे नृणामिति ... भाष्या ।
... धिषणमन्तो दुर्बोधो गुरुदिन ... ॥" --उ म कथा।

सस्कृता प्राकृता चेति भापे प्राधान्यमर्हत ।
तत्रापि सस्कृता तावद् दुर्विदग्धहृदि स्थिता ॥
**वालानामपि सद्वोधकारिणी कर्णपेशला ।**
**तथापि प्राकृता भापा न तेपामपि भासते ॥ "**

—उपमितिभवप्रपञ्चाकथापीठे ।

प्राकृतभापाया प्राकृतकाव्यस्य च प्रशस्तत्वम्

सस्कृतकाव्यालङ्कार-च्छन्दोलक्षण-नाटकादिग्रन्थेपु पुरातनै सस्कृतवदिय प्राकृतभापाऽपि समाश्रिता । तथा सुप्रसिद्धनृपसातवाहन दण्डि वाक्पति-राज–राजशेखर–प्राकृतमञ्जरीकार–शम्भुरहस्यकार–भूपणभट्टतनय–सिद्धर्पि–महेश्वरसूरि–जयवल्लभ–नमिसाधु–त्रिविक्रमदेवप्रभृतिभिर्भूरिभिर्भापातत्त्ववेदिभि प्राकृतभापाया प्राकृतकाव्यस्य च मधुरता मृदुता सरलता सर्वग्राह्यता सर्वोपकारिता हृदयङ्गमता च प्रोद्घोपि ।

तथाहि सातवाहन —

प्राकृतकाव्यस्य माधुर्यम्

" अमय **पाइयकव्व** पढिउ सोउ च जे न जाणाति ।
कामस्स तत्ततत्तिं कुणति ते कह न लज्जति [१] ॥"

—गाथासप्तशत्याम् ।

जयवल्लभ —

" **पाइयकव्वस्स** नमो **पाइयकव्व** च निम्मिय जेण ।
ताह चिय पणमामो पढिऊण य जे विजाणति ॥"—वज्जालग्गे [२] ।

कविदण्डी—

" महाराष्ट्राश्रया भापा प्रकृष्ट **प्राकृत** विदु ।
सागर सूक्तिरत्नाना **सेतुवन्धादि** यन्मयम् ॥"

—काव्यादर्शे [ १,३४ ]

प्राकृतमञ्जरीकार —

" प्रसीद तु च वाचस्ता यासा माधुर्यमुच्छ्रितम् ।
**प्राकृत**च्छद्मना चक्रे **कात्यायन**महाकवि ॥
अहो ! तत् **प्राकृत** हारि प्रियावक्त्रेन्दुसुन्दरम् ।
सूक्तयो यत्र राजन्ते सुधानिष्यन्दनिर्भरा ॥ "

—प्राकृतमञ्जर्याम् ( प्राकृतप्रकाशवृत्तौ )

---

१ अमृत **प्राकृतकाव्य** पठितु श्रोतु च य न जानते ।
कामस्य तत्त्वचिन्ता कुर्वन्ति त कथं न लज्जन्ते ? ॥

२ **प्राकृतकाव्याय** नम **प्राकृतकाव्य** च निर्मित येन ।
तांश्चैव प्रणमाम पठित्वा च य विजानन्ति ॥

जयवल्लभ —

प्राकृतकाव्यस्य मृदुता

“[1] पाइयकव्वुल्लावे पडिवयण सक्कएण जो देइ ।
सो कुसुमसत्थर पत्थरेण अबुहो विणासेइ ॥
उज्झउ सक्कयकव्व सक्कयकव्व च निम्मिय जेण ।
वसहर व पलित्त तडयडतट्टत्तण कुणइ ॥
**पाययकव्व** पढिउ गुफेउ तह य कुज्जपसूण ।
कुविय च पसाएउ अज्ज वि बहवे न याणति ॥”

—वज्जालग्गे ।

राजशेखर —

“[2] परुसो **सक्कअबधो पाउअ**( इय )बधो वि होइ सुउमारो ।
पुरिसाण महिलाण जेत्तियमिहतर तेत्तियमिमाण ॥”

—कर्पूरमञ्जरीसट्टके ।

वाक्पतिराज —

प्राकृतस्य प्रभाव, प्राकृतादन्य भाषानिर्गम

“[3] उम्मिल्लइ लायण्ण **पययच्छायाएँ सक्कयवयाण** ।
**सक्कयसक्कारुक्करिसणेण पययस्स** वि पहावो ॥
णवमत्थदसण सनिवेससिसिराओ बधरिद्धीओ ।
अविरलमिणमो आभुवणबधमिह णवर **पययम्मि** ॥
**सयलाओ इम वाया विसति एत्तो य णेंति वायाओ ।**
एन्ति समुद्द चिय णेति सायराओ चिय जलाइ ॥

१ प्राकृतकाव्योल्लापे प्रतिवचनं संस्कृतेन यो ददाति ।
स कुसुमस्रस्तरं प्रस्तरेणाबुधो विनाशयति ॥
उज्झतु संस्कृतकाव्यं संस्कृतकाव्यं च निर्मितं येन ।
धराग्रहमिव प्रदीप्तं तडतडत्त्वं करोति ॥
**प्राकृतकाव्यं पठितुं गुम्फयितुं तथा च कुब्जप्रसूनम् ।**
कुपितं च प्रसादयितुमद्यापि बहवो न जानन्ति ॥

२ परुषः संस्कृतबन्धः प्राकृतबन्धस्तु भवति सुकुमारः ।
पुरुषाणां महिलानां यावदिहान्तरं तावदनयोः ॥

३ उन्मीलति लावण्यं प्राकृतच्छायया संस्कृतवचसाम् ( पदानाम् ) ।
**संस्कृतसंस्कारोत्कर्षणेन प्राकृतस्यापि प्रभावः ॥**
नवमर्थदर्शनं संनिवेशशिशिरा बन्धर्द्धयः ।
अविरलमिदमाभुवनबन्धमिह केवलं प्राकृते ॥
**सकला इह वाचो विशन्ति इतश्च निर्यान्ति वाचः ।**
आयान्ति समुद्रं निर्यान्ति सागरादेव जलानि ॥

हरिसविसेसो वियसावओ य मउलावओ य अच्छीण ।
इह बहिहुत्तो अंतोमुहो य हिययस्स विप्फुरइ ॥[1]"
—गउडवहे [ ६९, ९२–९४ ]

यायावरीयराजशेखर —

" यद् योनिः किल संस्कृतस्य सुदृशां जिह्वासु यन्मोदते
यत्र श्रोत्रपथावतारिणि कटुर्भाषाक्षराणां रसः ।
गद्यं चूर्णपदं पदं रतिपतेस्तत् प्राकृतं यद्वच—
स्ताँल्लाटाँल्ललिताङ्गि ! पश्य नुदती दृष्टेर्निमेषव्रतम् ॥"
—बालरामायणे [ ४८, ४९ ]

यायावरीयराजशेखर —

प्राकृतस्य प्रचार ' श्रूयते च कुन्तलेषु सातवाहनो नाम राजा, तेन प्राकृतभाषाऽऽत्मकमन्तःपुर एवेति समानं पूर्वेण ।'
—काव्यमीमांसायाम् [ पृ ५० ]

भोजदेव —

' केऽभूवन् नाढ्यराजस्य राज्ये प्राकृतभाषिणः ? ।'
—सरस्वतीकण्ठाभरणे [ २, १९ ]

भूषणभट्टतनय —

प्राकृतभाषाया महिलानामादर " अइरमणीया रयणी सरओ वि मणोहरो तुमं च साहीणो ।
अणुकूलपरियणाए मन्ने त नत्थि ज नत्थि ॥
ता किं पि पओसविणोअमेत्तसुहयं मणहरुल्लावं ।
साहेह अउव्वकहं सुरसं महिलायणमणोज्जं ॥
तं मु(मु)द्धमुद्धबुद्धाहि(ए) वयणयं निसुणिऊण णे भणियं ।
कुवलयदलच्छि ! एत्थ कईहिं तिविहा कहा भणिया ॥

---

१ हर्षविशेषो विकासकश्च मुकुलीकारकश्चाक्ष्णो । इह बहिर्मुखोऽन्तर्मुखश्च हृदयस्य विस्फुरति ॥
२ अतिरमणीया रजनी शरदपि मनोहरा त्वं च स्वाधीनः ।
अनुकूलपरिजनाया मन्ये तन्नास्ति यन्नास्ति ॥
तत् किमपि प्रदोषविनोदमात्रसुखदां मनोहरालापाम् ।
कथयतापूर्वकथां सुरसां महिलाजनमनोज्ञाम् ॥
तत् मुद्ध( मुग्ध )मुग्धाम्बुरुहाया वचनं निश्रुत्यानेन भणितम् ।
कुवलयदलाक्षि ! अत्र कविभिस्त्रिविधा कथा भणिता ॥

जयवल्लभ —

प्राकृतकाव्यस्य मृदुता

" पाइयकव्वुल्लावे पडिवयण सक्कएण जो देइ ।
सो कुसुमसत्थर पत्थरेण अबुहो विणासेइ ॥
उज्झउ सक्कयकव्व सक्कयकव्व च निम्मिय जेण ।
वसहर व पलित्त तडयडतट्टत्तण कुणइ ॥
पाययकव्व पढिउ गुफेउ तह य कुज्जपसूण ।
कुविय च पसाएउ अज्ज वि बहवे न याणति ॥ "

—वज्जालग्गे ।

राजशेखर —

" परुसो सक्कअबधो पाउअ( इय )बधो वि होइ सुउमारो ।
पुरिसाण महिलाण जेत्तियमिहतर तेत्तियमिमाण ॥ "

—कर्पूरमञ्जरीसट्टके ।

वाक्पतिराज —

प्राकृतस्य प्रभाव, प्राकृतादन्य भाषानिगम

" उम्मिल्लइ लायण्ण पययच्छायाएँ सक्कयवयाण ।
सक्कयसक्कारुक्करिसणेण पययस्स वि पहावो ॥
णवमत्थदसण सनिवेससिसिराओ बधरिद्धीओ ।
अविरलमिणमो आभुवणबधमिह णवर पययम्मि ॥
सयलाओ इम वाया विसति एत्तो य णेंति वायाओ ।
एन्ति समुद्द चिय णेन्ति सायराओ च्चिय जलाइ ॥

---

१ प्राकृतकाव्योल्लापे प्रतिवचनं संस्कृतेन यो ददाति ।
स कुसुमसंस्तरं प्रस्तरेणाबुधो विनाशयति ॥
उज्झतु संस्कृतकाव्यं संस्कृतकाव्यं च निर्मितं येन ।
वंशगृहमिव प्रदीप्तं तटतटत्त्वं करोति ॥
प्राकृतकाव्यं पठितुं गुम्फयितुं तथा च कुब्जप्रसूनम् ।
कुपितं च प्रसादयितुमद्यापि बहवो न जानन्ति ॥

२ परुषः संस्कृतबन्धः प्राकृतबन्धोऽपि भवति सुकुमारः ।
पुरुषाणां महिलानां यावदिहान्तरं तावदनयोः ॥

३ उन्मीलति लावण्यं प्राकृतच्छायया संस्कृतवचसाम् ( पदानाम् ) ।
संस्कृतसंस्कारोत्कर्षणेन प्राकृतस्यापि प्रभावः ॥
नवमर्थदर्शनं संनिवेशशिशिरा बन्धर्द्धयः ।
अविरलमिदमाभुवनबन्धमिह नवरं प्राकृते ॥
सकला इदं वाचो विशन्ति इतश्च निर्यान्ति वाचः ।
आयान्ति समुद्रमेव निर्यान्ति सागरादेव जलानि ॥

—कुमारपालभूपालमहामात्यपृथ्वीपालकारिते मल्लिनाथचरिते [ लि प १४३ ]

नाट्ये स्त्रीणा पाठ्य प्राय प्राकृत भवति । यदाह धनञ्जय —

' स्त्रीणा तु प्राकृत प्राय '—दशरूपके [ परि० २,६० ]

महेश्वरसूरि —

प्राकृतकाव्यस्य प्राकृतभाषायाश्च सर्वेषा सुखबोधकता हृदयङ्गमताऽऽदि

"सक्कयकव्वस्सत्थ जेण न याणाति मदबुद्धिया ।
सव्वाण वि सुहबोह तेणेम पाइय रइय ॥ १ ॥
गूढत्थदेसिरहिय सुललियवन्नेहि विरइय रम्म ।
पाइयकव्व लोए कस्स न हियय सुहावेइ ? ॥
परउवयारपरेण सा भासा होइ एत्थ भणियव्वा ।
जायइ जीए विबोहो सव्वाण वि बालमाईण ॥"

—पञ्चमीमाहात्म्ये ( वि स १००९ वर्षे लि० जे० भा०ता०प्रति )

जयवल्लभ —

प्राकृतकाव्ये रस इत्यादि

" पाइयकव्वम्मि रसो जो जायइ तह व छेयभणिएहिं ।
उययस्स य वासियसीयलस्स तित्तिं न वच्चामो ॥
देसियसद्दपलोट्ट महुरक्खरछदसठिय ललिय ।
फुडवियडपायडत्थ पाइयकव्व पढेयव्व ॥
ललिए महुरक्खरए जुवईयणवल्लहे ससिंगारे ।
सते पाइयकव्वे को सक्कइ सक्कय पढिउ ? ॥"

—वज्जालग्गे (पद्यालये )

त्रिविक्रमदेव —

" अनल्पार्थसुखोच्चारशब्दसाहित्यजीवितम् ।
स च प्राकृतमेवेति मत सूक्तानुवर्तिनाम् ॥"

—प्राकृतशब्दानुशासने ।

---

१ सस्कृतकाव्यस्यार्थ येन न जानन्ति मन्दबुद्धय । सर्वेषामपि सुखबोध तेनेद प्राकृत रचितम् ॥
गूढार्थदेशीरहित सुललितवर्णैर्विरचित रम्यम् । प्राकृतकाव्य लोके कस्य न हृदय सुखयति ? ।
परोपकारपरेण सा भाषा भवत्यत्र भणितव्या ।
जायते यया विबोध सर्वेषामपि बालकादीनाम् ॥

२ प्राकृतकाव्ये रसो यो जायते तथा च छेकभणितै । उदकस्य च वासितशीतलस्य तृप्तिं न व्रजाम ॥
देशीशब्दपर्यस्त मधुराक्षर-च्छन्द सस्थित ललितम् । स्फुटविकटप्रकटार्थ प्राकृतकाव्य पठितव्यम् ॥
ललिते मधुराक्षरे युवतिजनवल्लभे सशृङ्गारे । सति प्राकृतकाव्ये क शक्नोति सस्कृत पठितुम् ? ॥

तं जह दिव्वा तह दिव्व-माणुसी माणुसी तह चेय ।
तत्थ वि पढमेहिं कय कईहि किर लक्खण किं पि ॥
अन्न सक्कय-पायय-संकिन्नकहा सुवन्नरइयाओ ।
पुव्व( वुच्च )ति महाकइपुंगवेहि तिविहाउ सुकहाउ ॥
ताण मज्झे अम्हारिसेहिं अबुहेहिं जाउ सीसंति ।
ताउ कहाउ न लोए मयच्छि ! पावंति परिहाव ॥
ता किं म उवहसेसि सुयणु ! असुएण सद्दसत्थेण [१] ।
उल्लविय(उ) न तीरइ किं पुण वियडो कहाबंधो [२] ॥
भणियं च पिययमाए पिययम ! **किं तेण सद्दसत्थेण ?** ।
**जेण सुहासियमग्गो भग्गो अम्हारिसजणस्स ॥**
**उवलब्भइ जेण फुड अत्थो अकयत्थिएण हियएण ।**
**सो चेय परो सद्दो इट्ठो किं लक्खणेणम्ह ? ॥**
**एमेय सुद्धजुयइ मणोहर पाययाइ भासाए ।**
पविरलदेसिसुलक्ख कहसु कह दिव्वमाणुसिय ॥ "

—लीलावतीकथायाम् [ वि स १२६९ वर्षे लि जे भा ताडपत्रीया प्रति ]

हरिभद्रसूरि —

"निरगादि तया प्रियतम ! मम नैपुण्य समस्ति शस्तम(त)मम् ।
**पाइयवाणीए** तओ पढिय तह केरिसं सहइ [२] ॥
रेणेऽथ कुमारेणेति सुतनु ! मा वद वदन्ति यत् कृतिन ।
उत्तिविसेसो कव्वं भासा जा हो[उ] सा होउ ॥"

---

१ तद् यथा दिव्या तथा दिव्य मानुषी मानुषी तथैव। तत्रापि प्रथमैः कृतं कविभिः किल लक्षण किमपि॥ अन्यत् संस्कृत-प्राकृत-संकीर्णकथा सुवर्णरचिता । उच्यन्ते महाकविपुङ्गवैस्त्रिविधा सुकथा ॥ तासां मध्येऽस्मादृशैरबुधैर्या कथ्यन्ते । ता कथा न लोके मृगाक्षि! प्राप्नुवन्ति परिभावम् ॥ तत् किं मामुपहससि सुतनु! अश्रुतेन शब्दशास्त्रेण। उल्लपितुं न शक्यते किं पुनर्विकट कथाबन्ध ? ॥

भणितं च प्रियतमया प्रियतम ! किं तेन शब्दशास्त्रेण ? ।
येन सुभाषितमार्गो भग्नोऽस्मादृशजनस्य ॥
उपलभ्यते येन स्फुटमर्थोऽकदर्थितेन हृदयेन ।
स एव पर शब्द इष्ट । किं लक्षणेनास्माकम् ? ॥
एवमेव शुद्धयुवति मनोहरा प्राकृतया (°ताया) भाषया ( पादाम् )।
प्रविरलदेशीसुलक्ष्यां कथय कथां दिव्य-मानुषीम् ॥

२ प्राकृतवाण्यां ततः पठितं तथा कीदृशं ... ? ।
३ उक्तिविशेषः काव्यं भाषा या भवतु सा भवतु ।

ततो बाह्या येऽष्टत्रिंशद् वर्णास्तै सस्कारे कृते **संस्कृतं** जातम् । ततश्च अनेके भाषाभेदा अभूवन् । तेन सकलशास्त्रमूल मातृकारूप **प्राकृत**मेव प्रथमम् । युगादौ सर्वज्ञैरिति लोकोपचा(का)राय प्रथम **प्राकृत**मुपदिष्टम् । सर्वाक्षरसनिपातलब्धीना श्रीद्वादशाङ्गीनिर्माणसूत्रधाराणा श्रीगणधराणा सिद्धान्त**प्राकृत**करणे कारणमिदम्—

'बाल–स्त्री–मूढ–मूर्खाणा नृणा चारित्रकाङ्क्षिणाम् ।
अनुग्रहार्थं तत्त्वज्ञै सिद्धान्त **प्राकृत** कृत ॥'

राजन् ! भाषा भवतु याऽपि साऽपि, पर तु परमार्थ एव विलोक्यते । यत् पठन्ति लोका —

'अत्थनिवेसो त च्चिय सद्दा त च्चेव परिणमता वि ॥
उत्तिविसेसो कव्व भासा जा होउ सा होउ ॥'

पर कस्यापि ज्ञानलवदुर्विदग्धस्य खण्डखण्डपाण्डित्यतुण्डकण्डूकरालितस्येय **प्राकृत**निदा । यदुक्तम्—

'सोहेइ सुहावेइ उवभुजतो लवो वि **लच्छीए** ।
एसा(देवी) **सरस्सई** पु(उ)ण असमग्गा क न(किंपि) विनडेइ ॥'

[ गउडवहे गा ९८ ]

इति श्रुत्वा राजादय सर्वेऽपि **प्राकृत**प्रशसां कुर्वन्तो विशिष्य तदर्थश्रवणप्रवणा बभूवु ॥ "

—कुमारपालप्रबन्धे (वि स १४७५ वर्षे लि पत्तनजैनभा० प्रतिप ८१ )

प्राकृतभाषा किम् सस्कृतभाषाया विकृतिरूपा ?

[3]केचिदावेदयन्ति–" प्राकृतभाषा सस्कृतभाषाया विकृतिरूपा ततोऽपभ्रश्य समुत्पन्ना यत शाब्दिकश्चण्डो निजे प्राकृतलक्षणे 'सस्कृतयोनि' इति प्राकृतस्य प्रकार लक्षितवान् । तथा प्रतिष्ठितप्रामाणिकहेमचन्द्राचार्योऽपि निजे प्राकृतशब्दानुशासने 'अथ प्राकृतम्' [ ८, १, १ ] इत्यस्य स्वोपज्ञव्याख्यायाम्–'प्रकृति सस्कृतम् । तत्र भव तत आगत वा प्राकृतम् ।' इति व्याख्यातवान् । एवमयेऽप्यूचु । यथा कविदण्डी—

'सस्कृत नाम दैवी वागन्वाख्याता महर्षिभि । **तद्**भवस्तत्समो देशीत्यनेक **प्राकृत**क्रम ॥'

—काव्यादर्शे [ १, ३३ ]

---

१ अर्थनिवेश स एव शब्दास्त एव परिणमन्तोऽपि। उक्तिविशेष काव्य भाषा या भवतु सा भवतु॥

२ शोभते सुखयत्युपभुज्यमानो लवोऽपि **लक्ष्म्या** । एषा **सरस्वती** पुनरसमग्रा क न विनटयति?॥

३ ई बी कॉवेलप्रभृतिमहाशया प्राकृतप्रशासा तावनाऽऽदिपु ।

वि' स ११२५ वर्षे नमिसाधु —

"सकलजगज्जन्तूनां व्याकरणादिभिरनाहतसंस्कारः सहजो वचनव्यापारः प्रकृतिः, तत्र भवः सैव वा **प्राकृतम्**। 'आरिसवयणे सिद्ध देवाण **अद्धमागहा** वाणी' इत्यादिवचनाद् वा प्राक् पूर्व कृतं

प्राकृतस्य व्याख्या, विशालता च

**प्राक्कृत बाल-महिलाऽऽदिसुबोध सकलभाषानिबन्धनभूत वचनमुच्यते।** मेघनिर्मुक्तजलमिवैकस्वरूप तदेव च देशविशेषात् संस्कारकरणाच्च समासादितविशेष सत् संस्कृताद्युत्तरविभेदानाप्नोति। अत एव शास्त्रकृता **प्राकृत**मादौ निर्दिष्टम्, तदनु संस्कृतादीनि।

**पाणिन्या**दि याकरणोदितशब्दलक्षणेन संस्करणात् **संस्कृत**मुच्यते। तथा **प्राकृत** भाषैव किञ्चिद्विशेषलक्षणान्**मागधिका** भण्यते। तथा **प्राकृत**मेव किञ्चिद्विशेषात् **पैशाचिकम्**। सू(शौ)रसेन्यपि **प्राकृतभाषैव**। तथा **प्राकृतमेवापभ्रंश**"

—रुद्रटायकाव्यालङ्कारटिप्पने [ २, १२ ]

प्राकृतनिन्दा परिहार

"को निनिन्देदिमा भाषां भारतीमुग्धभाषितम्[१]।
यस्या **प्रचेतस. पुत्रो** व्याकर्ता भगवान् ऋषि ॥
**प्राकृत** चार्षमेवेद यद्धि **वाल्मीकि**शिक्षितम्।
तदनार्ष भने(णे)द् यो वै प्राकृत स्यात् स एव हि ॥"

—शम्भुरहस्ये [ प १७, १८ ]

"अन्यदा कोऽपि मत्सरी श्रीहेमसूरितेजोऽसहिष्णुरेकान्ते राजानमिदमवादीत्– 'देव! प्राय **प्राकृत**मेते पठन्ति सिद्धान्तोऽप्येतेषां **प्राकृत**मय। तत् प्रभाते [ ऽ ] श्रोतव्यमिदम्। '**संस्कृत** स्वर्गिणां भाषा' सैव महतां प्रत्यूषे श्रोतव्या श्रेयस्करी चेति किमर्थं प्रथम तद्दूषण निर्धीयते?।'

एतदाकर्ण्य राजा विज्ञातभाषाभेदतत्त्व निश्चित् **प्राकृते** कृतादरस्तत्स्वरूप श्रीगुरूणामकथयत्। श्रीगुरव प्राहु –अनुपासितसद्गुरुकुलस्य, अज्ञातवाङ्मयतत्त्वस्य कस्यापीद वच। राजन्! अनेकधा भाषाभेदवैचित्र्येऽपि पर युगादौ प्रथमपुरुषेण ज्ञातत्रैलोक्यस्वरूपेण प्रथम चतुर्दशसहस्राष्टत्रिंशद्व्यञ्जनरूपा द्विपञ्चाशदक्षरप्रमाणा मातृकैवोपदिष्टा। सा च **प्राकृत**स्वरूपा सर्वप्राकृतजनानामुपकारिणीति।

१ 'पर्वानिर्मुक्त...' । विस्मय... प्राकृतीदं... ॥ –द [illegible]

ततो बाह्या येऽष्टत्रिंशद् वर्णास्तै सस्कारे कृते **संस्कृतं** जातम् । ततश्च अनेके भाषाभेदा अभूवन् । तेन सकलशास्त्रमूल मातृकारूप **प्राकृतमेव** प्रथमम् । युगादौ सर्वज्ञैरिति लोकोपचा(का)राय प्रथम **प्राकृतमुपदिष्टम्** । सर्वाक्षरसनिपातलब्धीना श्रीद्वाद-शाङ्गीनिर्माणसूत्रधाराणा श्रीगणधराणा सिद्धान्त**प्राकृत**करणे कारणमिदम्—

'बाल–स्त्री–मूढ–मूर्खाणा नृणा चारित्रकाङ्क्षिणाम् ।
अनुग्रहार्थं तत्त्वज्ञैः सिद्धान्त **प्राकृत** कृत ॥'

राजन् ! भाषा भवतु याऽपि साऽपि, पर तु परमार्थ एव विलोक्यते । यत् पठन्ति लोका —

'अत्थनिवेसो त च्चिय सद्दा त च्चेव परिणमता वि ॥
उत्तिविसेसो कव्व भासा जा होउ सा होउ ॥'

पर कस्यापि ज्ञानलवदुर्विदग्धस्य खण्डखण्डपाण्डित्यतुण्डकण्डूकरालितस्येय **प्राकृत**-निन्दा । यदुक्तम्—

'सोहेइ सुहावेइ उवभुजतो लवो वि **लच्छीए** ।
एसा(देवी) **सरस्सई** पु(उ)ण असमग्गा क न(किंपि) विनडेइ ॥'

[ गउडवहे गा ६८ ]

इति श्रुत्वा राजादय सर्वेऽपि **प्राकृत**प्रशसा कुर्वन्तो विशिष्य तदर्थश्रवणप्रवणा बभूवु ॥ "

—कुमारपालप्रबन्धे (वि स १४७५ वर्षे लि पत्तनजैनभा० प्रतिप ८१ )

प्राकृतभाषा किम् सस्कृतभाषाया विकृतिरूपा ?

[3]केचिदावेदयन्ति–" प्राकृतभाषा सस्कृतभाषाया विकृतिरूपा ततोऽपभ्रश्य समुत्पन्ना यत शाब्दिकश्चण्डो निजे प्राकृतलक्षणे 'सस्कृतयोनि' इति प्राकृतस्य प्रकार लक्षितवान् । तथा प्रतिष्ठितप्रामाणिकहेमचन्द्राचार्योऽपि निजे प्राकृतशब्दानुशासने 'अथ प्राकृतम्' [ ८, १, १ ] इत्यस्य स्वोपज्ञव्याख्यायाम्–' प्रकृति सस्कृतम् । तत्र भव तत आगत वा प्राकृतम् । ' इति व्याख्यातवान् । एवमन्येऽप्यूचु । यथा कविदण्डी—

'सस्कृत नाम दैवी वागन्वाख्याता महर्षिभि ।तद्भवस्तत्समो देशीत्यनेक **प्राकृतक्रम** ॥'

—काव्यादर्श [ १, ३३ ]

१ अर्थनिवेश स एव शब्दास्त एव परिणमन्तोऽपि।उक्तिविशेष काव्य भाषा या भवतु सा भवतु॥
२ शोभते सुखयत्युपभुज्यमाना लवोऽपि **लक्ष्म्या** ।एषा **सरस्वती** पुनरसमग्रा क न विनाटयति?॥
३ ई वी कॅविलप्रभृतिमहाशया प्राकृतप्रकाशस्य तावनाऽऽलिपु ।

तथा वाग्भट —

'सस्कृत स्वर्गिणा भाषा शब्दशास्त्रेषु निश्चिता । प्राकृत तज्ज तत्तुल्य-देश्यादिकमनेकधा ॥'

——काव्यालङ्कारे [ २, २ ]

तथा चान्ये——

' प्रकृते सस्कृतायास्तु विकृतिः प्राकृती मता । '

——रूपकपरिभाषायाम् ।

' तद्भवा सस्कृतभवा सिद्धा साध्येति सा द्विधा । '

——षड्भाषाचन्द्रिकायाम् ।

इत्यादयोऽनेके उल्लेखा उपलभ्यन्ते । ”

चिन्त्य खल्वेतत् सुसूक्ष्मचिन्तनशीलै प्रेक्षावद्भि, शाब्दिकाना सदाशयस्तैर्नैव सम्यग् व्यचारि वा नैव समनबोधीति ज्ञायते । सविदित खलु लक्षणप्रवृत्तिर्लक्ष्यदर्शन पूर्विका भवति । लाक्षणिकै शाब्दिकै केवल लक्ष्यदृष्ट्या प्राक्सिद्धानामेव शब्दानामनुशासन क्रियते । तैश्च व्युत्पित्सूना तत्तद्भाषाशब्दज्ञानार्थं वर्णानुपूर्वीदार्ढ्याय च व्याकरण-पद्धत्या प्रकृति–प्रत्यय–लोपागमादेश–वर्णविकारादिसूचनपूर्वं पदाख्यान क्रियते । तदपि भिन्नभिन्नवैयाकरणैर्भिन्न–भिन्नप्रकारेण द्योत्यते । एव शब्दशुद्धि–सिद्धिज्ञापने तदैव तत्रैव वा भाषाशब्दोत्पत्तिर्जातेति मन्तव्य न चौचित्यमञ्चति । अद्यावधि भिन्न-भिन्नजनपदेषु प्रयुज्यमाना सहस्रशोऽपि प्राकृता शब्दा वर्षसहस्रद्वयादपि प्राग्भवेषु जैनसिद्धान्तसूत्रेषु कथा–नाट्यप्रभृतिषु च प्रयुक्तास्तत्रैव किञ्चिदिव परावृत्ताश्च दृश्यन्ते ।

पाणिनीयभाष्यकारेण पतञ्जलिना यथा ' सिद्धे शब्दार्थसम्बन्धे ' सस्कृतशब्दानाम-नुशासनप्रवृत्तिरसूचि तथैव प्राकृतशब्दाना सिद्धता विचार्य तत्ससूचनाय शाब्दिकचण्डेन ' सिद्ध प्राकृत त्रेधा ' इति सूत्र प्राकृतलक्षणप्रारम्भे व्यरचि ।

वररुचिर्निजे प्राकृतप्रकाशे ' प्रकृति शौरसेनी ' [ १०, २, ११, २ ] ' शौरसेनी । प्रकृति सस्कृतम् ' [ १२, १, २ ] इत्यादीनि सूत्राणि निर्मितवान् । भामहेन च मनोरमाया तद्व्याख्येत्थमदर्शि–' अस्या पैशाच्या प्रकृति शौरसेनी । स्थिताया शौरसेन्या पैशाचीलक्षण प्रवर्तयितव्यम् । अस्या मागध्या प्रकृति शौरसेनीति वेदितव्यम् ।' एव हेमचन्द्राचार्यादिभिरपि प्राकृतस्य प्रकृति सस्कृतमित्युच्चारितेऽपि तथैव वेदितव्य भवति–' स्थिते सस्कृते प्राकृतलक्षण प्रवर्तयितव्यम् ' सिद्धा साध्यमाना च सस्कृत प्रकृतिमुपादाय तत्र प्रत्यय–लोपागम–वर्णविकारादेशादिविभागदर्शनेन लक्षणपद्धत्या लक्ष्यदृष्ट्या सिद्धाना प्राकृतशब्दाना ज्ञान कर्तव्यम् । सस्कृतभाषायामेतादृशा शब्दास्ते च प्राकृतभाषायामेतादृशा, तत्र [illegible] । न चैतावता प्राकृतभाषा

संस्कृतभाषात प्रादुर्भूतेत्याम्नातम्। तत खलु लक्षणेऽपि केचिच्छब्दा संस्कृतप्रकृतित्वेन, न सिध्यन्ति, लक्ष्येषु च दृश्य ते, तेषा शुद्धताज्ञापनाय 'दाढादयो बहुलम्' [परि० ४, ३४] इति सूत्ररचना प्राकृतप्रकाशे कृता विलोक्यते। भामहेन तदित्थ व्याख्यातम् 'आदिशब्दोऽय प्रकारे तेन सर्वे एव देशसङ्केतप्रवृत्तभाषाशब्दा परिगृहीता' इत्युक्तम्। प्राकृतम ञ्जर्या प्राकृतप्रकाशस्य पद्यविवृतौ च तदित्थ विवेचितम्—

"एषामपरिमेयत्वाद् दाढाऽऽदीना पद प्रति। न शक्या गणना वीचीर्गणयेत् को नु सागरे॥
या सर्वलोकसामान्या संस्कृतानन्विता गिर। अट्टमट्टप्रभृतयस्ताश्चाप्यत्रैव दर्शयेत्॥
संस्कृतप्रकृतित्वेन ये न सिध्यन्ति केवलम्। तेषा लक्ष्येषु शब्दाना दाढादित्व विमृश्यताम्॥"

संस्कृतयोनि–संस्कृतभव–तज्जप्रभृतिशब्दानामप्याकूतमितोऽन्यद् वितर्क्यमाण न समीचीनमाभाति। मानवाना सहजवचनव्यापाररूपप्रकृतिभवा स्वभावसिद्धा प्राग्भवा अपि प्राकृतशब्दास्तत्र तत्र शब्दानुशासने तु संस्कृतप्रकृतिमुपादाय संस्कृतसंस्कारोत्कर्षणपूर्व नापिता यावत् प्रदर्शिता एव च संस्कृतप्रकृतो साधिता अत एवोपचारात् ते तत्र संस्कृतयोनय संस्कृतभवा संस्कृतजा इत्यादिरूपेणोच्यन्ते ते, परमार्थतस्तु ते प्रागेव सिद्धा। अत एव वाक्पतिराजेन गौडवधे–'सकलाश्चेमा वाच प्राकृतमहार्णवाद् निर्यान्ति, तत्रैव च प्रविशन्ति' इत्याद्युदगारि, यायावरीयराजशेखरेण काव्यमीमांसायाम्–'तद् योनि किल संस्कृतस्य' इत्यादि वदता तदेवासूचि, नमिसाधुना रुद्रटीयकाव्यालङ्कारस्य टिप्पनेऽपि च तथा व्याख्यायि [भूमिका पृ० ८०]

हेमचन्द्राचार्यस्याशयोऽस्मादन्यथा न सम्भाव्यते। येन हेमचन्द्राचार्येण निजे प्राकृतशब्दानुशासने उदाहृतिनिदर्शने जैनसिद्धान्तसूत्रपाठा उदाहार्यन्त, तत्प्रणेतॄणा सर्वेषा तीर्थङ्कराणा च भाषा प्राकृतापरसज्ञाऽर्धमागधी भवतीति स्वोपज्ञालङ्कारचूडा-

१ 'उसभमजिअ च वन्द'—नामस्तवे [हैम ८।१।२४]
'देव नाग-सुवण्ण-'—श्रुतस्तवे [हैम ८।१।२६]
'लोगस्सुज्जोअगरा'—नामस्तवे [हैम ८।१।१७७]
'चउवीस पि जिणवरा —नामस्तवे [हैम ८।३।१३७]
'तण कालेण तण समएण —कल्पसूत्रे [हैम ८।३।१३७]

२ "अकृत्रिमस्वादुपदा परमार्थाभिधायिनीम्। सर्वभाषापरिणता जैनीं वाचमुपास्महे॥
एकरूपाऽपि हि भगवतोऽधमागधीभाषा वारिदविमुक्तवारिवदाश्रयानुरूपतया परिणमति।'
—काव्यानुशासन [१,१]

'वाणी भाषा अर्धमागधी नर–तिर्यग्–सुरलोकभाषया सवदति तद्भाषाभावेन परिणमती त्यवधीला।'
—हैमीनाममालायाम् [१,५९]

मणिसमुपेते काव्यानुशासने स्वोपज्ञाभिधानचिन्तामणिवृत्त्युपेताया नाममालायां च प्रत्यपादि, अनादिप्रवृत्तप्राकृतभाषाविशेषो देश्यति देशीनाममालाया प्रादर्शि, प्रमाणमामांसाया विद्यानामनादित्वं न्यरूपि, इमा सकला वाच प्राकृतमहार्णवाद् निर्गता इति निरूपयितुर्वाक्पतिराजस्य कृतेर्गौडवधस्योदाहरणानि च निजे प्राकृतशब्दानुशासने न्यदर्शिषत, तस्याशयो यथा 'प्राकृतभाषा संस्कृतभाषात समुत्पन्ना' इति कल्प्यते तथा नैव सम्भाव्यम्, प्रत्युत तेन प्राकृतभाषाया प्राग्भवत्व प्रसाधि, तच्च कुमारपालप्रबन्धत उद्धृत्योपरि समटङ्कि। अत्र विषये बहु वक्तव्यमपि भूमिकाया विस्तारभयादियताऽपि विरम्यते।

**अर्धमागधी भाषा**

जिनवर–गणधरैर्निजसिद्धान्त प्राकृतभाषाया प्राणायीति प्राक् प्रमाणपूर्वं प्रादर्शयम्। ऋषीणा चेद प्राकृतमार्षप्राकृतसंज्ञयाऽप्युच्यते। सामान्यप्राकृतात् किञ्चिद्वैशिष्ट्योपेत चैतादृग् अर्धमागधीभाषानाम्ना पुरातनैर्व्याहारि। जैनसिद्धान्तादिगतोल्लेखदर्शनेन परिज्ञायते खल्वर्धमागधीभाषाया प्रतिष्ठा। अन्तिमस्तीर्थकृद् भगवान् महावीरस्तथाऽन्येऽपि सर्वे तीर्थङ्करा अस्यामेव भाषाया धर्ममुपदिशन्ति स्म। पुराण जैनसिद्धान्तसूत्रमेतद्भाषानियतमाम्नायते। देवा अप्येतां भाषा भाषन्ते। एषैव भाषा भाष्यमाणाऽन्यभाषाभ्यो विशिष्यते। भाषाऽऽर्याश्चैतस्या भाषाया भाष्यमाणाया भाष्यन्ते। संस्कृतप्रधाने नाट्ये चेट–राजपुत्र–श्रेष्ठिप्रभृताना पाठ्यत्वेनास्या एव नियोजना निरदेशि तद्विदै। एतत्प्रतिष्ठापका उल्लेखाश्चेमे—

---

१ "दसविसेसपसिद्धीइ भण्णमाणा अणतया हुति।
तम्हा अणाइपाइयपयट्टभासाविसेसओ देसी॥

स्वोपज्ञव्याख्या—तस्मादनादिप्रवृत्तप्राकृतभाषाविशेष एवाय देशीशब्देनोच्यते।"

—देशीनाममालायाम् [ ४ ]

२ "ननु यदि भवदीयानीमानि जैनसिद्धान्तसूत्राणि, तर्हि भवन्तु पूर्वं कानि कियन्ति वा तान्यासन्निति।

अयुक्तमिदमनुयोक्तुं यथा, पाणिनि–पिङ्गल–कणादाक्षपादादिभ्योऽपि पूर्वं कानि कियन्ति वा व्याकरणादिसूत्राणीत्येतदपि पर्यनुयुङ्क्ष्व।

अनादय एवैता विद्या संक्षेप–विस्तरविवक्षया नवनवीभवन्ति, तत्तत्कर्तृकाश्चोच्यन्ते। किं नाश्रौषीर्न कदाचिदनीदृशं जगदिति॥"

—प्रमाणमीमांसायाम्।

३ 'इहदिव्यमूर्तिनिवर्त्ताय—' [ समवाइ सू १, हेम ८।४।४४८ ]
'अप्पाणाभ[illegible]—' [ उववाइ सू ८६ हेम ८।१।१० ]
'उसमणु भगवन्त–' [ उववाइ सू १८८, हेम ८।१।१७ ]
'विणुग्गिअसत्तमणु–' [ उववाइ सू ३११ हेम ८।१।१८ ]

समवायाङ्गसूत्रे—

अर्हद्देशना भाषा

"भगव[1] च ण **अद्धमागहीए भासाए** धम्ममाइक्खइ । सा वि य ण **अद्धमागही भासा** भासिज्जमाणी तेसिं सव्वेसिं आरियमणारियाण दुप्पय–चउप्पय–मिय–पसु–पक्खि–सरीसिवाण अप्पप्पणो हिय–सिव–सुहदायभासत्ताए परिणमइ ।" —[स्था ३४ आ. समितिप्र० पृ ६०]

औपपातिकसूत्रे—

"**अद्धमागहाए**[2] भासाए भासति अरिहा धम्म ।"

"तेए ण समणे भगव **महावीर** कूणिअस्स भभसारपुत्तस्स **अद्धमागहाए** भासाए भासति ।" —[आ स पृ ३४, ७७]

महावीरनिर्वाणात् ५३० (वि स ६०) वर्षे[4] विमलसूरि —

"आयंरिससमा धरणी जायइ इह **अद्धमागही वाणी** ।
तो **अद्धमागहीए भासाए** सव्वजीवहियजणण ।
जलहरगभीररवो कहेइ धम्म जिणनरिंदो ॥"

—पउमचरिए [प ९, ६, उ २, गा ३४, ६१]

हेमचन्द्राचार्य —

"वाणी नृ–तिर्यक्–सुरलोकभाषासवादिनी ।

स्वो० व्या० [ तीर्थङ्कराणा ] वाणी भाषा **अर्धमागधी** नर–तिर्यक्–सुरलोकभाषया सवदति तदभाषापरिणामेन परिणमतीत्येवशीला ।"

—अभिधानचिन्तामणिनाममालायाम् [का० १, श्लो० ९९]

---

१ भगवांश्च किलार्धमागध्या भाषाया धर्ममाख्याति । साऽपि च किलार्धमागधी भाषा भाष्यमाणा तेषा सर्वेषामार्यानार्याणा द्विपद–चतुष्पद–मृग–पशु–पक्षि–सरीसृपाणामात्मात्मनो हित–शिव–सुखदायभाषातया परिणमति ।

२ अर्धमागध्या भाषायां भाषतेऽर्हन् धर्मम् ।

३ तत किल श्रमणो भगवान् महावीर कूणिकस्य भम्भासारपुत्रस्य अर्धमागध्यां भाषायां भाषते ।

४ "पचेव य वाससया दुसमाए तीसवरिससजुत्ता । वीरे सिद्धिमुवगए तओ निबद्ध इम चरिय ॥
राहूनामायरिओ ससमयपरसमयगहियसब्भावो । विजओ य तस्स सीसो नाइलकुलवसनदियरो ॥
सीसेण तस्स रइय राहवचरिय तु सूरिविमलेण । सोऊण पुव्वगए नारायण–सीरिचरियाइ ॥"

—जै ध प्र सभया प्रकाशिते ।

५ आदर्शसमा धरणी जायते इहार्धमागधी वाणी ।
ततोऽर्धमागध्यां भाषायां सर्वजीवहितजननम् । जलधरगम्भीररव कथयति धर्म जिनवरेन्द्र ॥

"एकरूपाऽपि हि भगवतोऽर्धमागधीभाषा वारिदविमुक्तवारिवदाश्रयानुरूपतया परिणमति" इत्यादि । —स्वोपज्ञकाव्यानुशासनवृत्तौ [श्लो० १]

वाग्भट —

" सर्वार्धमागधीं सर्वभाषासु परिणामिनीम् ।
सर्वेषां सर्वतो वाचं सार्वज्ञीं प्रणिदध्महे ॥ " —काव्यानुशासने ।

पारिष्ठापनिकाविधौ—

जैनसूत्रभाषा

" पुव्वावरसंजुत्तं वेरग्गकरं सततमविरुद्धं ।
पोराणमद्धमागहभासानियय हवइ सुत्तं ॥ "

—आवश्यकसूत्रे [ दे ला प्र प १२८]

हेमचन्द्राचार्य —

'पोराणमद्धमागहभासानियय हवइ सुत्तं' इत्यादिना आर्षस्य अर्धमागधभाषानियतत्वमाम्नायि वृद्धैस्तदपि प्रायोऽस्यैव विधानात् न वक्ष्यमाणलक्षणस्य ।

—[ है प्रा ८।४।२८७ ]

भगवतीसूत्रे—

देव-भाषा विशिष्टा भाषा

" देवा णं भंते ! कयराए भासाए भासंति ? । कयरा वा भासा भासिज्जमाणी विसिस्सइ ? । गोयमा ! देवा णं अद्धमागहाए भासाए भासंति । सा वि य णं अद्धमागही भासा भासिज्जमाणी विसिस्सइ ।

—[ श० ५, उ० ४, सू १९१ आ स पृ २३१ ]

नमिसाधुरुद्धरतीदं प्राचीनं पद्यम्—

" ओरिसवयणे सिद्धं देवाणं अद्धमागही वाणी । "—रु टिप्पने ।

प्रज्ञापनासूत्रे—

भाषाऽऽर्याणां भाषा

से किं तं भासारिया ? । भासारिया जे णं अद्धमागहाए भासाए भासंति । जत्थ वि य णं बंभी लिवी पवत्तइ ।

—[ आ स पृ ५६ ]

---

१ पूर्वापरसंयुक्तं वैराग्यकरं स्व(स)तन्त्रमविरुद्धम् । पुराणमर्धमागधभाषानियतं भवति सूत्रम् ॥

२ देवा ननु भगवन् ! कतरया भाषया भाषन्ते ?, कतरा वा भाषा भाष्यमाणा विशिष्यते ? । गौतम ! देवा अर्धमागध्या भाषया भाषन्ते । साऽपि च अर्धमागधी भाषा भाष्यमाणा विशिष्यते ।

३ आर्षवचने सिद्धं देवानामर्धमागधी वाणी ।

४ अथ के ते भाषाऽऽर्याः ? । भाषाऽऽर्या ये अर्धमागध्या भाषया भाषन्ते । यत्रापि च ब्राह्मी लिपिः प्रवर्तते ।

मरतमुनि —

नाट्ये पाठ्या भाषा

"मागध्यवन्तिजा प्राच्या शूरसेन्यर्धमागधी ।
वाल्हीका दाक्षिणात्या च सप्त भाषा प्रकीर्तिता ॥"
"चेटानां राजपुत्राणां श्रेष्ठिनां चार्धमागधी[1] ।"

—नाट्यशास्त्रे [ अ १७, श्लो० ४८,५० ]

शकस ५९८ ( वि स ७३३ ) वर्षे जिनदासमहत्तर —

अर्धमागधी शब्दव्याख्या

"मगहद्धविसयभासानिबद्ध अद्धमागह । अहवा अट्ठारसदेसीभासाणियत अद्धमागध ।" —निशीथचूर्णौ ।

वि स ११२०–८ वर्षे अभयदेवसूरि —

"अद्धमागहीय त्ति' प्राकृतादीनां षण्णां भाषाविशेषाणां मध्ये या मागधी नाम भाषा 'रसोर्लशौ मागध्याम्' इत्यादिलक्षणवती सा असमाश्रितस्वकीयसमग्रलक्षणा 'अर्धमागधी' इत्युच्यते ।" —समवायाङ्गसूत्रवृत्तौ [ पृ ९८ ]

"रसोर्लशौ मागध्याम्' इत्यादि यन्मागधभाषालक्षण तेनापरिपूर्णा प्राकृत-[भाषालक्षण]बहुला 'अर्धमागधी' इत्युच्यते ।" —औपपातिकसूत्रवृत्तौ ।

"मागधभाषालक्षण किञ्चित् किञ्चिच्च प्राकृतभाषालक्षण यस्यामस्ति सा 'अर्धमागध्या' इति व्युत्पत्त्या अर्धमागधी ।" —भगवतीसूत्रवृत्तौ ।

मलयगिरि —

"अत सौ पुंसि' इति मागधिकभाषालक्षणात् सर्वमपि हि प्रवचनमर्धमागधिकभाषाऽऽत्मकम्, अर्धमागधिकभाषया तीर्थकृता देशनाप्रवृत्ते ।" —नन्दीसूत्रवृत्तौ ।

मार्कण्डेय —

"शौरसेन्या अदूरत्वाद् इयमेवार्धमागधी ।" —प्राकृतसर्वस्वे [ पृ १०३ ]

---

१ भरतमुनिप्रणीते नाट्यशास्त्रेऽभिनवगुप्तविरचितायामभिनवभारत्यां टीकायां चार्धमागधी-सञ्ज्ञिताया गातेर्विषयोऽपि विवेचित ( गा ओं सिरीझ प्र अ ५, पृ २५५–२५७ ) जिज्ञासुना द्रष्टव्य ।

२ जिनदासमहत्तरकृता नन्द्यध्ययनचूर्णि शकसं ५९८ वर्षेषु समाप्तेति तत्प्रान्ते पठ्यते— "शकराज्ञो पञ्चसु वर्षशतेषु व्यतिक्रान्तेषु अष्टनवतिषु नन्द्यध्ययनचूर्णी समाप्ता ।"

—पत्तनभां० सूची ।

३ मगधार्धविषयभाषानिबद्धमर्धमागधम् । अथवाऽष्टादशदेशीभाषानियतमर्धमागधम् ।

क्रमदीश्वर —

" महाराष्ट्रीमिश्राऽर्धमागधी ।" —संक्षिप्तसारे [ पृ ३८, सू ९७ ]

अष्टादश देशीभाषा — जिनदासमहत्तरेणार्धमागध्या अष्टादशदेशीभाषानियतत्वमसूचि, तथा जैनसिद्धान्तेऽपि राजकुमार–गणिकाऽऽदीनामष्टादशदेशीभाषाविशारदत्वं व्यावर्णि । ततो ज्ञायते खलु भारतवर्षेऽष्टादशदेशीभाषाणां प्राक् प्रतिष्ठा ।

तथा च ज्ञातसूत्रे—

" तंते ण से मेहे कुमारे बावत्तरिकलापंडिए णवगंधसुयत्त(णवगसुत्त)पडिबोहिए **अट्ठारसविहि( ह )प्पयारदेसिभासा**विसारए गीयरई गंधव्वणट्टकुसले × × ।"

" तत्थ ण चंपाए णयरीए **देवदत्ता** णाम गणिया परिवसइ चउसट्ठिकलापंडिया चउसट्ठिगणियागुणोववेया अउणत्तीसाविसेसरममाणी एक्कवीसरइगुणप्पहाणा बत्तीसपुरिसोवयारकुसला णवगसुत्तपडिबोहिया **अट्ठारसदेसीभासा**विसारया सिंगारागारचारुवेसा × × ।"

—[ ओ इ ता प २९,७१, आ समितिप्र० ३८,९२ ]

विपाकश्रुते—

"तत्थ ण वाणियगामे **कामज्झया** नाम गणिया होत्था बावत्तरिकलापंडिया चउसट्ठिगणियागुणोववेया एगूणतीसविसेसे रममाणी एक्कवीसरतिगुणप्पहाणा बत्तीसपुरिसोवयारकुसला णवगसुत्तपडिबोहिया **अट्ठारसदेसीभासा**विसारया सिंगारागारचारुवेसा गीयरई गंधव्वनट्टकुसला ।

—[ अ २, सू ८, आ समिति पृ ४९ ]

औपपातिकसूत्रे—

"तए ण से **दढपइण्णे** दारए बावत्तरिकलापंडिए नवगसुत्तपडिबोहिए **अट्ठारस**-

---

१ ततः खलु स मेघः कुमारो द्वासप्ततिकलापण्डितो सुप्तप्रतिबोधितनवाङ्गोऽष्टादशविधदेशीभाषाविशारदो गीतरतिर्गान्धर्वनाट्यकुशल * * ।

२ तत्र खलु चम्पायां नगर्यां देवदत्ता नाम गणिका परिवसति चतुःषष्टिकलापण्डिता चतुष्षष्टिगणिकागुणोपपेता एकोनत्रिंशद्विशेषरममाणा एकविंशतिरतिगुणप्रधाना द्वात्रिंशत्पुरुषोपचारकुशला सुप्तप्रतिबोधितनवाङ्गा अष्टादशदेशीभाषाविशारदा शृङ्गारागारचारुवेषा ।

३ तत्र खलु वाणिजग्रामे कामध्वजा नाम गणिकाऽभूत् द्वासप्ततिकलापण्डिता चतुःषष्टिगणिकागुणोपपेता एकोनत्रिंशद्विशेषरममाणा एकविंशतिरतिगुणप्रधाना द्वात्रिंशत्पुरुषोपचारकुशला सुप्तप्रतिबोधितनवाङ्गा अष्टादशदेशीभाषाविशारदा शृङ्गारागारचारुवेषा गीतरतिगान्धर्वनाट्यकुशला * * ।

४ तत्र खलु स दृढप्रतिज्ञो दारको द्वासप्ततिकलापण्डितो नवाङ्गसुप्तप्रतिबोधितोऽष्टादशदेशीभाषाविशारदो गीतरतिर्गान्धर्वनाट्यकुशल * * ।

देसीभासाविसारए गीयरती गधव्वणट्टकुसले।" —[ आ समितिप्र० प ९८ ]

राजप्रश्नीयसूत्रे—

"तए ण से दढपतिण्णे दारए उम्मुक्कबालभावे विण्णायपरिणयमित्ते जोव्वणगमणुपत्ते बावत्तरिकलापडिए अट्ठारसविहदेसिप्पगारभासाविसारए णवगसुत्तपडिबोहए गीयरई गधव्वनट्टकुसले सिंगारागारचारुवेसे * *।"[1]

—[ आ समितिप्र० प १४८ ]

कुवलयमालाकथायाम्—

विक्रमीयनवमशताब्दीपूर्वार्धभवायां कुवलयमालाकथायामष्टादशदेशीभाषाणा दिग्दर्शन कारित तत्तद्देश्याना वर्ण—वपुर्वेष—प्रकृतिप्रदर्शनपुरःसरम्। परिचेतव्य खलु प्राक् कुवलयमालाकथा—कर्तृ—समयादिसम्बन्धो यतोऽवसीयतेऽपभ्रश—देशीभाषाऽऽदीनां विशिष्ट स्वरूपम्। क्षत्रियराजकुलोत्पन्नेनाचार्योद्योतनेन दाक्षिण्यचिह्नसूरिणा जावालिपुरे निजविद्यागुरुवीरभद्रकारिते ऋषभजिनेन्द्रायतने स्थित्वा शककाले एकदिनोनेषु सप्तसु शतेषु व्यतीतेषु ( वि स ८३५ वर्ष ) चैत्रस्य कृष्णपक्षे चतुर्दश्यामपराह्णे एषा कुवलयमालासज्ञिका धर्मकथा रचिताऽऽसीद्, यदा तत्र श्रीवत्सराजनामा रणहस्ती पार्थिवो विद्यमान आसीत्[2]। अस्या कथाया प्राचीन वि स ११३९ वर्षे लिखित ताडपत्रीयमादर्शपुस्तकमद्यापि जेसलमेरुदुर्गीयजैनभाण्डागारे विद्यते[3]। वि स ११६० वर्षे देवचन्द्रसूरिणा, त्रयोदशशताब्द्या माणिक्यचन्द्रसूरिणा चेय कथा शान्तिनाथचरितेऽस्मारि, रत्नप्रभसूरिणा च चतुर्दशशताब्दीप्रारम्भे सस्कृतभाषाया सक्षेपरूपेणावातारि।

---

१ तत्र खलु स दृढप्रतिज्ञो दारक उन्मुक्तबालभावो विज्ञानपरिणतमात्रो यौवनमनुप्राप्तो द्वासप्ततिकलापण्डितोऽष्टादशविधप्रकारदेशीभाषाविशारद सुप्त—प्रतिबोधितनवाङ्गो गीतरतिर्गान्धर्वनाट्यकुशल शृङ्गारागारचारुवेष * *।

२ "आसी तिकम्माहिरउ महादुवारम्मि खत्तिउ पयडो। उज्जोअणो त्ति णाम त च्चिअ परिभुंजिरे तइआ ॥
तस्स वि पुत्तो सपइ णामेण वडेसरो त्ति पयडगुणो। तस्सुज्जोअणणामो तणउ अह विरइआ तेण ॥
तुगमलघ जिणभवणमणहर सार(व)याउल विमम। जावालिउर अट्ठावय व अह अत्थि पुहईए ॥
तुग धवल मणहारिरयणपसरतधयवडाडोव। उसहजिणिंदायतण कराविय वीरभद्देण ॥
तत्थ ठिएण अह चोद्दसीए चेत्तस्स कण्हपक्खम्मि। णिम्मविआ बोहिकरी भव्वाण होउ सव्वाण ॥
परभडभिउडीभगो पणईयणरोहणो कलाचदो। सिरिवच्छरायणामो रणहत्थी पत्थिवो जइआ ॥
* * * चदकुलावयवेण आयरियउज्जोअणेण रइआ मे। * * *
सगकाले वोलीणे वरिसाण सएहि सत्तहि गएहिं। एगदिणेणूणेहिं रइआ अवरण्हवेलाए ॥"

—कुवलयमालाकथायाम् [ जे भा ता प २५३ ]

३ जे भा सूची [ अप्रसिद्ध० पृ ४२–४३, २७ ] द्रष्टव्या।

चन्द्रकुलीनोऽसावुद्योतनसूरिर्महाद्वारनिवासिक्षत्रियोद्योतनस्य 'पौत्रो' वटेश्वरस्य च तनय आसीदित्यादिनिजपरिचयं स्वयं तत्प्रशस्तावसूचयत् ।

---

१ कवर्जनको वटेश्वर स एव कवेर्गुरोस्तत्त्वाचार्यस्य गुरुरासीदिति तत्प्रशस्तितो ज्ञायते-उत्तरापथे चन्द्रभागासरितस्तीरे स्थिता पर्वतिकापुरी तोरराजस्य राजधान्यासीत् । तोरराजस्य गुरुणा गुप्त वंशीयहरिगुप्ताचार्येण तत्र निवेशो दत्तोऽभूत् । तस्य शिष्यो महाकविर्देवगुप्तनामा तथा शिवचन्द्र गणिर्महत्तरश्च । स जिनवन्दनहेतवे भ्राम्यन् क्रमेण भिल्लमालनगरे सुस्थित । तस्य शिष्यो यक्षदत्तग णिनामा क्षमाश्रमणो महात्मा त्रैलोक्येऽपि प्रकटयशा आसीत् । तस्य प्रभूता शिष्यास्तपो-वीर्य-वचन-लब्धि-सम्पन्ना आसन्, यैर्देवगृहैर्गूर्जरदेशो रम्य कृत, ते च षडिमे आसन्— १ नाग, २ वृन्द, ३ मम्मट, ४ दुर्ग, ५ आचार्योऽग्निशर्मा, ६ वटेश्वरश्च । तेन ( वटेश्वरेण ) आकाशवप्र(?)नगरे रम्यो जिनालयो निर्मापित आसीत्, तस्य मुखदर्शनादेव प्रकुपितोऽपि प्रशाम्यति स्म । तस्यान्तिम शिष्यस्तत्त्वाचार्यनामा तप -शीलादिगुणवानासीत् । तस्य शिष्येण ह्रीदेवीदत्तदर्शनमनसा विलसद्दाक्षिण्यचिह्ननैषा कुवलयमालाख्या रचिता । आचार्यवीरभद्रो हरिभद्रश्चैतस्य विद्यागुरू स्त इत्यादीत एव ज्ञायते—

"अत्थि पुहईपसिद्धा दोण्णि पहा दोण्णि चेय देस त्ति । तत्थ त्थि पह णामेण उत्तरावह बुहजणाइण्ण॥
सुइदिअचारुसोहा विअसिअकमलाणणा विमलदेहा । तत्थत्थि जलहिदइआ सरिआ अह चदभाय त्ति॥
तीरम्मि तीय पयडा पव्वइया णाम रयणसोहिल्ला । जत्थ ट्ठिय ठ्ठिए भुत्ता पुहई सिरितोररापण ॥
तस्स गुरू हरिउत्तो आयरिउ आसि गुत्तवसाउ । तीय णयरीय दिण्णो जेण णिवेसो तहिं काले ॥
तस्स वि सिस्सो पयडो महाकई देवउत्तणामो त्ति । सिवचदगणी यह मयहरो त्ति ॥
सो जिणवदणहेउ कह वि भमतो कमेण सपत्तो । सिरिभिल्लमालणयरम्मि सठिउ कप्परुक्खो व्व ॥
तस्स खमासमणगुणा णामेण जक्खयत्तगणिणामो । सीसो महइ महप्पा आसि तिलोए वि पयडजसो॥
तस्स य प( व )हुयमीसा तववीरिअवयणलद्धिसपण्णा । रम्मो गुज्जरदेसो जेहि क्उ देवहरएहिं ॥
णागो विंदो मम्मड दुग्गो आयरियअग्गिसम्मो य । छट्ठो वडेसरो छम्मुहस्स वअणस्स ते आसि ॥
आगासवप्पणरो जिणालय तण णिम्मविय रम्मा तस्स मुहदसणे च्चिअ अवि पसमइ जो अक्त्थो वि॥
तस्स वि सीसो अंनो तत्तायरिउ त्ति णाम पयडगुणो । आसि तवतेयणिज्जियपविगयमोहो ॥
सीलगविउलसालो लक्खणरुक्खो व्व णिक्कपो ॥
सासेण तस्स एसा हिरिदेवीदिण्णदसणमणेण । रइया कुवलयमाला विलसियदक्खिण्णइन्धेण॥
दिण्णजहिच्छियफलउ बहुकित्तीकुसुमरेहिरामोउ । आयरियवीरभद्दो अ यावरो कप्परुक्खो व्व ॥
सो सिद्धतण गुरू जुत्तीसत्थेहि जस्स हरिभद्दो । बहुगथसत्थवित्थरपत्थरियपयडसव्व(स)त्थो ॥"

—कुवलयमालाकथायाम् [ ज भा सा प २५२-३ ]

दाक्षिण्यचिह्नेनोद्योतनाचार्याभिधेनेतेन कविना पादलिप्त-शातवाहन-षट्पर्णक (षट्पर्णक)-गुणाढ्य-व्यास-वाल्मीकि-बाण-विमलाङ्क-देवगुप्त-हरिवर्षकार-सुलोचनाकार प्रभञ्जन-रविषेण(?)जट-सिंहनन्दि-महाकवीनां सत्कवी-कोष(गाथारत्नावली)-उपमिति-बृहत्कथा-भारत-रामायण-कादम्बरी-पद्मचरित-त्रिभुवनचरित-हरिवंश-सुलोचना-वरांगचरित-पद्मचरित-समरमृगाङ्ककथाद्युल्लेख कुवलयमालाकथारम्भे कृतोऽस्ति । तत्र च त्रिभुवनचरितकारो महाकविर्वाप्यनन्दी यथाऽनुपि तथा तोरराजगुरुहरिगुप्ताचार्यशिष्य स्म, कुवलयमालायां तस्यैव पूर्वो ज्ञायते ।

एषा कुवलयमालाकथा सकीर्णकथात्वेन प्राधान्येन प्राकृतभाषाया रचिताऽपि कुतूहलेन क्वचित् परवचनवशेन सस्कृतापभ्रश–पैशाचीभाषास्वपि निबद्धाऽत एव कविना देशीभाषालक्षणविद्भ्यस्तदविज्ञेभ्योऽपि च कुवलयमालापठनार्थमप्रार्थि[3]। ह्रीदेवीप्रसादसम्भवाया-मत्र कथाया प्रसङ्गतोऽष्टादशदेशीभाषाणा मध्याद् गोल्ल–मध्यदेश–मगधान्तर्वेदी–कीर–टक्क–सिन्धु–मरु–गूर्जर–लाट–मालव–कर्णाटक–तायिक–कोसल–महाराष्ट्रान्ध्र–भवाना षोडशदेश्याना वणिजा वपुर्वर्ण–वेष–प्रकृतिपूर्व भाषास्वरूप प्रदर्शितमित्यमवलोक्यते—

" जाव थोअतरे दिट्ठ इमिणा अणेयप( व )णिअपसारयावद्धकयाविक्कयपयत्त-वट्टमाणकलयलरव हट्टमग्ग ति । तत्थ य पविसमाणेण दिट्ठे अणेयदेसभासालक्खिए देसवणिए । त जहा—

---

१ "पाययभासारइया मरहट्ठय-देसिवण्णयणिवद्धा । सुद्धा सयलकह च्चिय तावस जिण सत्थवाहिल्ला ॥
कोऊहलेण कत्थइ परवयणवसेण सक्कयणिवद्धा । किंचि अवब्भसकआ दा विय पेसायभासिल्ला ॥"
सव्वकहागुणजुत्ता सिंगारमणोहरा सुरइअगी । सव्वकलागमसुहया सकिण्णकह त्ति णायव्वा ॥
एयाण पुण मज्झे एस च्चिअ होइ एत्थ रमणिज्जा ' सव्वभणिईण सारो जेण इमा तेण त भणिमो ॥" `

—कुवलयमालाकथायाम् [ जे भा ता प ३ ]

२ "लद्ध पि थिर होहिति होइ विअड्ढो कद य पत्तट्ठो । तम्हा कुवलयमाल वाएज्ज सुहो पयत्तेण॥
जो जाणइ देसीउ हासाउ लक्खणाइ वा ज(धाऊ)य । वयणय गाहा छेअ कुवलयमाल पि सो पढउ॥
एआइ जो ण याणइ सो पि हु वाएउ पोत्थय घेत्तु । एत्थ चिय अह णाहिति कइणो हि उ णिउ[ण]त्तणगुणेण॥
जो सज्जणो विअड्ढो एसा रामेइ त मणालक्खा । जो पिसुणदुव्विअड्ढो रसहाव तस्स णो देइ ॥ '

—कुवलयमालाकथायाम् [ जे भा ता प २५२ ]

३ ह्रीदेवीप्रसादाद् विरचिनामेता धर्मकथा सुजन पाणिगृहीतीं कुर्वता तेन कविजनकनेद व्यतापि—' हे सुजन ' दुर्गतबालेव ऋजुपदगामिनी सरलोल्लापा भूषणविहीना चैषा कथा–कन्या मया तुभ्य स्नेहेन दत्ताऽस्यै स्नेह दद्या , अस्या स्खलित छादय , वचन पूरये , अथवा तत्र कुलस्य सदृश कुर्या ' इति । एतादृश तत्प्रतिपादिका गाथा —

जीए मह देवयाए अक्खाण साहिय इम सव्व । तीए च्चिअ णिम्मविया एसा अम्हे मिम एत्थ ॥
दिअहस्स पहरमेत्ते गयमय कुणउ भणसु को पुरिसो। हिअयगया हिरिदेवी जइ मि लिह तस्स णो दइ॥
पउमासणमि पउममिआए पउमेण हत्थपउमम्मि। हिअयपउमम्मि सा मे हिरिदेवी होउ सण्णिहिआ॥
जइ किंचि लिंगभिण्ण विभत्तिभिण्ण च कारयवीहीण । रहसेण मए लिहिय को दोसो एत्थ देवीए?॥
उज्जुपयगमणिआ सल्लावा य भूसणविहूणा । दुग्गयबाल व्व मए दिण्णा तुह सुअण ' णेहेण ।
णेह देज्ज इमीए खलिअ छाएज्ज वयणय पुलए । अहवा कुलस्स सरिस करेज्ज हो! तुज्झ ज सुअणा '॥
दक्खिअकलाकलावा धम्मकहा णेयदिक्खियणरिंदा । इह लोए होइ थिरा एसा उसहस्स कित्ति व्व॥

—कुवलयमालाकथायाम् [ जे भा ता प २५२ ]

४ यावत् स्तोकान्तरे दृष्टोऽननानेकवणिक्प्रसारितावद्धक्रयविक्रयप्रवृत्तिवर्तमानकलकलरवो हट्ट मार्ग इति । तत्र च प्रविशता दृष्टा अनकदेशभाषालक्षिता देशवणिज । तद् यथा—

कसिणे णिट्ठुरवयणे बहुकसमरभुजए अलज्जे य ।
'अरे' त्ति उल्लवते अह पेच्छइ **गोल्लए** तत्थ ॥
णय–णीति–संधि–विग्गहपडुए बहुजंपिरे य पयतीए ।
'तेरे मेरे आउ' त्ति जंपिरे **मज्झदेसे** य ॥
णीहरियपोट्टदुव्वण्णमडहए सुरयकेलितल्लिच्छे ।
'एगे ले' जंपुल्ले अह पेच्छइ **मागहे** कुमारो ॥
कविले पिंगलणयणे भोअणकहमेत्तदिण्णवावारे ।
'कित्तो किम्मो जिअ' जंपिरे य अह **अतवेते** य ।
उत्तुंग–थूलघोणे कणयवण्णे य भारवाहे य ।
'सरि वा( पा )रि' जंपिरे **कीरे** कुमारो पलोएइ ॥
दक्खिण्ण–दाण–पोरुस–विण्णाण–दयाविवज्जियसरीरे ।
'एह तेह' चवंते **टक्के** उण पेच्छए कुमारो ॥
सललित–मिदु–मदपए गंधव्वपिए सदेसगयचित्ते ।
'व( च )उडयमे' भणिरे सुहए अह **सेन्धवे** दिट्ठे ॥
वंके जडे य जड्डे बहुभोइ कठि( ढि )ण–पीण–सू( थू )णगे ।

---

१ कृष्णान् निष्ठुरवचनान् बहुकसमरभुञ्जानानलज्जाश्च ।
'अर रे' इत्युल्लपतोऽथ प्रेक्षते **गोल्लकास्तत्र** ॥
नय-नीति सन्धि विग्रहपटुकान् बहुजल्पाकांश्च प्रकृत्या ।
'तेरे मेरे आओ' इति जल्पतो **मध्यदेशयांश्च** ॥
नि सृतोदर दुर्वर्ण–वामनान् सुरतकेलितल्लिप्सान् ।
'एगे छे' जल्पाकानथ प्रेक्षते **मागधान्** कुमार ॥
कपिलान् पिङ्गलनयनान् भोजनकथामात्रदत्तव्यापारान् ।
'कित्तो किम्मो जिअ' जल्पाकानथान्तर्वेदांश्च ॥
उत्तुङ्ग-स्थूलघोणान् कनकवर्णांश्च भारवाहांश्च ।
'सरि पारि' जल्पाकान् **कीरान्** कुमार प्रलोकयति ॥
दाक्षिण्य-दान-पौरुष विज्ञान-दयाविवर्जितशरीरान् ।
'एई तेह' भणतान् **टक्कान्** पुन प्रेक्षते कुमार ॥
सललित-मृदु मन्दपदान् गान्धर्वप्रियान् स्वदेशगतचित्तान् ।
'वउडम म' भणत सुभगानथ **सैन्धवान्** दृष्टान् ॥
वक्रान् जडांश्च जड्डान् बहुभोजिन कठिन-पीन-स्थूलाङ्गान् ।

'अप्पा तुप्पा' भणिरे अह पेच्छइ **मारुए** तत्तो ॥
घयलो( ला )लियपुट्ठंगे धम्मपरे संधि–विग्गह णिउणे ।
'णउ रे भल्लउं' भणिरे अह पेच्छइ **गुज्जरे** अवरे ॥
ण्हाउलित्त–विलित्ते कयसीमंते सुसोहियसुगत्ते ।
'आहम्ह काइ तुम्ह मित्तु' भणिरे पेच्छए **लाडे** ॥
तणु–साम–मडहदेहे कोवणए माण–जीविणो रोद्दे ।
'भाउअ भइणी तुम्हे' भणिरे अह **मालवे** दिट्ठे ॥
उक्कडदप्पे पिअमोहणे ए( प )यरोद्दे पयगवित्ती य ।
'अट्ठि पोण्डि म( न )रे' भणिरे पेच्छइ **कण्णाडए** अण्णे ॥
कुप्पासपाउअंगे मासरुई पाणमयणतल्लिच्छे ।
'इसि किसि मिसि' भणमाणे अह पेच्छइ **ताइए** अवरे ॥
सत्थकलापत्तट्ठो(ड्ढे) माणी पिअकोवणे कढिणदेहे ।
'जल तल ले' भणमाणे **कोसलए** पुलइए अवरे ॥
दढ–मडह–सामलंगे सहिरे अहिमाण–कलहसीले य ।
'दिण्णल्ले गहिल्ले' उल्लविरे तत्थ **मरहट्ठे** ॥
पिअमहिला–संगामे सुंदरगत्ते य भोइणे रोद्दे ।

---

१ 'अप्पा तुप्पा' भणतोऽथ प्रेक्षते **मारवास्तत** ॥
घृतलो(ला)लितपुष्टाङ्गान् धर्मपरान सन्धि-विग्रहे निपुणान् ।
'णउ रे भल्लउ' भणतोऽथ प्रेक्षते **गौर्जरानपरान्** ॥
स्नातोऽलिप्त विलिप्तान् कृतसीमन्तान् सुशोभितसुगात्रान ।
'आहम्ह काइ तुम्ह मित्तु' भणत प्रेक्षते **लाटायान्** ॥
तनु–श्याम–लघुदेहान् कोपनान् मानजीविनो रौद्रान् ।
'भाउअ भइणी तुम्हे' भणतोऽथ **मालवीयान्** दृष्टवान् ॥
उत्कटदर्पान् प्रियमोहनान् पदरौद्रान् पतङ्गवृत्तींश्च ।
'अट्ठि पोण्डि म(न)र भणत प्रेक्षते **कर्णाटकीयान**न्यान् ॥
कूर्पासप्रावृताङ्गान् मासरुचीन् पान–मदनतल्लिप्सान् ।
'इसि किसि मिसि' भणतोऽथ प्रेक्षत **तायिकान**परान् ॥
शा( शा )स्त्रकलाकुशलान् मानिन प्रियकोपनान् कठिनदेहान् ।
'जल तल ले' भणन **कौशलिकान्** प्रलोकतेऽपरान् ॥
दृढ-लघु श्यामाङ्गान् सहमानानभिमान-कलहशीलाश्च ।
'दिण्णल्ले गहिल्ले' उल्पतस्तत्र **महाराष्ट्रीयान्** ॥
प्रियमहिला-सङ्ग्रामान् सुन्दरगात्राश्च भोगिनो रौद्रान् ।

'अटि पुटि रटि' भणते र( अ )न्धे कुमरो पलोएइ ॥[1]
इअ अट्ठारस देसीभासाउ पुलइऊण सिरिअत्तो ।
अण्णाइ अ पुलएई खस-पारस-बब्बरादीए ॥"

—कुवलयमालाकथायाम् । [ जे. भा ता १३१-२ ]

देशभाषाणा प्राचीनता — उद्धृतैरुपरितनै कुवलयमालाया उल्लेखैरवगम्यते खलु तत्तद्देशभाषाणा प्राचीनतेति तदर्वाचीनताविषयक केषाञ्चिदभिमत निरस्त भवति । पादलिप्ताचार्यादिविरचितदेशीशास्त्रपरिशीलनेन विरचिते देशीशब्दसङ्ग्रहे सूच्यते खलु हेमचन्द्राचार्येण देशविशेषप्रसिद्धशब्दानामनन्तत्वमशक्यसर्वसङ्ग्रहत्व च[2] । बृहत्कल्पप्रभृतिषु जैनसिद्धान्तग्रन्थेषु महाभारत-नाट्यशास्त्र-कामशास्त्र-विष्णुधर्मोत्तर-मृच्छकटिक-मुद्राराक्षस-कादम्बरी-दशरूपकप्रभृतिष्वन्यग्रन्थेष्वपि देशभाषाणा स्मरणान्यवाप्यन्ते । तथाहि-

'नाणाविहदेसभासन्नू × × गुणसयकलिओ जुत्तो(ग्गो) पवयणसार परिकहेउ ।'[3]
[ बृहत्कल्पे प ४९, दशवैकालिकवृत्तौ प ९ उद्धियते हरिभद्रसूरिणा ]

"नाणादेसीकुसलो नाणादेसीकप्पस्स सुत्तस्स ।
अभिलावे अत्थकुसलो होई तओऽणेण गतव्व ॥"[4]

—बृहत्कल्पे [उ ६, वृ प ८३१]

---

१ 'अटि पुटि रटि' भणत आन्ध्रान् कुमार प्रलोकते ॥
इत्यष्टादश देशीभाषा प्रलोक्य श्रीदत्त ।
अन्याश्च प्रलोकयति खस पारस-बर्बरादीन् ॥

२ 'इदानीं नानादेशप्रसिद्धभाषास्वतिव्याप्तिवारणाय देशीलक्षणमाह—

देसविसेसपसिद्धीइ भण्णमाणा अणतया हुति । तम्हा अणाइपाइयपयट्टभासाविसेसओ देसी ॥

देशविशेषा महाराष्ट्र-विदर्भाभीरादयस्तेषु प्रसिद्धया मगा पश्चात्, निक्कइला जिन, उक्खुरुडुचिओ उत्क्षिप्त, प्रेयडा धूर्त, छिन्ना जार, विङ्गो प्रपञ्च, दड-मूढो मूर्ख एवमादी इत्येवमादय शब्दा यदि उच्यरन् तदा देशविशेषाणामनन्तत्वात् पुरुषायुषेणापि न सर्वसङ्ग्रह स्यात्, तस्माद् नादिप्रवृत्तप्राकृतभाषाविशेष एवाय देशीशब्देनोच्यत इति नातिव्याप्ति । यदाह—

'वाचस्पतेरपि मतिर्न प्रभवति दिव्ययुगसहस्रेण ।
देशेषु ये प्रसिद्धास्तान् शब्दान् सकलान् समुच्चेतुम् ॥"

—देशीनाममालायाम् [ गा ४ ]

३ नानाविधदेशभाषाज्ञ × × गुणशतकलितो योग्य प्रवचनसार परिकथयितुम् ।

४ नानादेशी( देशभाषा )कुशलो नानादेशीकल्पस्य सूत्रस्य ।
अभिलापेऽर्थकुशलो भवति ततोऽनेन गन्तव्यम् ॥

महर्षिर्व्यास —

" नानाचर्मभिराच्छन्ना नानाभाषाश्च भारत ।
कुशला देशभाषासु जल्पन्तोऽन्योन्यमीश्वरा ॥"
—महाभारते ( शल्यपर्व अ० ४६, श्लो० १०३ )

भरतमुनि —

" अत ऊर्ध्वं प्रवक्ष्यामि देशभाषाविकल्पनम् ॥ × ×
सौरसेन समाश्रित्य भाषा कार्या तु नाटके ।
अथवा च्छन्दत कार्या देशभाषा प्रयोक्तृभि ॥
नानादेशसमुत्थ हि काव्य भवति नाटके ॥"
—नाट्यशास्त्रे [ अ १७, श्लो० २४, ४६, ४७ ]

वात्स्यायन —

" नात्यन्त सस्कृतेनैव नात्यन्त देशभाषया ।
कथां गोष्ठीषु कथयल्लोके बहुमतो भवेत् ॥"—कामसूत्रे [१,४,५०]

" सुरते कर्णमूलेषु यत्र (तु निज)देशीयभाषया ।
दम्पत्योर्जल्पित मन्द मन्मन तद् विदुर्बुधा ॥ " —अन्यत्र ।

" सस्कृतै प्राकृतैर्वाक्यैर्य शिष्यमनुरूपत ।
देशभाषाऽऽद्युपायैश्च बोधयेत् स गुरु स्मृत ॥"—विष्णुधर्मोत्तरे ।

शूद्रक —

" चन्दनक —अरे ! को अप्पच्चओ तुह ? वअ दक्खिणत्ता अव्वत्तभासिणो खस—खत्तिखड—खडड्ढे—विलअ—कण्णाट—कण्णप्पावरणअ—दविड—चोल—चीण—बर्बर—खेरखान—मुख—मधुघातप्रभृतीना म्लेच्छजातीनाम् अनेकदेशभाषाभिज्ञा यथेष्ट मन्त्रयामो दिट्ठो दिट्ठा वा अज्जो अज्जआ वा किं शब्दविचार ? स्त्री—पु—नपुसकव्याख्यानमप्रस्तुतम् ।"
—मृच्छकटिके [ अ ६, पृ २२१ ]

विशाखदत्त —

" प्रयुक्ताश्च स्वपक्ष—परपक्षयोरनुरक्तापरक्तजनजिज्ञासया बहुविधदेश—वेष—भाषा—ऽऽचार—सञ्चारवेदिनो नानाव्यञ्जना प्रणिधय ।"—मुद्राराक्षसे [ १,९ ]

बाणभट्ट —

' शिक्षिताशेषदेशभाषेण सर्वलिपिज्ञेन ।' —कादम्बर्याम् [ पृ १०२ ]

धनञ्जय —

" देशभाषा—क्रिया—वेषलक्षणा स्यु प्रवृत्तय ।
लोकादेवागम्यैता यथौचित्य प्रयोजयेत् ॥
यद्देश नीचपात्र यत् तद्देश तस्य भाषितम् ।"
—दशरूपके [२,९८,६१]

'अटि पुटि रटिं' भणते र( अ )न्ध्रे कुमरो पलोएइ ॥
इअ अट्ठारस देसीभासाउ पुलइऊण सिरिअत्तो ।
अण्णाइ अ पुलएई खस-पारस-बब्बरादीए ॥"

—कुवलयमालाकथायाम् । [ जे भां ता १३१-२ ]

देशभाषाणा प्राचीनता

उद्धृतैरुपरितनै कुवलयमालाया उल्लेखैरवगम्यते खलु तत्तद्देशभाषाणा प्राचीनतेति तदर्वाचीनताविषयक केषाञ्चिदभिमत निरस्त भवति । पादलिप्ताचार्यादिविरचितदेशीशास्त्रपरिशीलनेन विरचिते देशीशब्दसङ्ग्रहे सूच्यते खलु हेमचन्द्राचार्येण देशविशेषप्रसिद्धशब्दानामनन्तत्वमशक्यसर्वसङ्ग्रहत्व च । बृहत्कल्पप्रभृतिषु जैनसिद्धान्तग्रन्थेषु महाभारत-नाट्यशास्त्र-कामशास्त्र-विष्णुधर्मोत्तर-मृच्छकटिक-मुद्राराक्षस-कादम्बरी-दशरूपकप्रभृतिष्वन्यग्रन्थेष्वपि देशभाषाणा स्मरणान्यवाप्यन्ते । तथाहि-

'नाणाविहदेसभासन्नू × × गुणसयकलिओ जुत्तो(ग्गो) पवयणसार परिकहेउ ।'
[ बृहत्कल्पे प ४५, दशवैकालिकवृत्तौ प ५ उद्ध्रियते हरिभद्रसूरिणा ]

"नाणादेसीकुसलो नाणादेसीकप्पस्स सुत्तस्स ।
अभिलावे अत्थकुसलो होई तओऽणेण गतव्व ॥"

—बृहत्कल्पे [उ ६, वृ प ८३१]

---

१ 'अटि पुटि रटि' भणत आन्ध्रान् कुमार प्रलोकते ॥
इत्यष्टादश देशीभाषा प्रलोक्य श्रीदत्त ।
अन्याश्च प्रलोकयति खस पारस-बर्बरादीन् ॥

२ "इदानीं नानादेशप्रसिद्धभाषास्वतिव्याप्तिवारणाय देशीलक्षणमाह—
देसविसेसपसिद्धीइ भण्णमाणा अणतया हुति । तम्हा अणाइपाइयपयट्टभासाविसेसओ देसी ॥
देशविशेषा महाराष्ट्र-विदर्भाभीरादयस्तेषु प्रसिद्धया भणा पश्चात्, निक्कइला जिन, उक्कुरुडुचिओ उत्क्षिप्त, श्रेयडो धूर्त, हिड्डो जार, विड्डो प्रपञ्च, दड्ड-मूढो मूर्ख एकग्राही इत्येवमादयः शब्दा यदि उच्यरन् तदा देशविशेषाणामनन्तत्वात् पुरुषायुषेणापि न सर्वसङ्ग्रह स्यात्, तस्माद् नादिप्रवृत्तप्राकृतभाषाविशेष एवाय देशीशब्देनोच्यते इति नातिव्याप्ति । यदाह—
'वाचस्पतेरपि मतिर्न प्रभवति दिव्यैर्युगसहस्रेण ।
देशेषु ये प्रसिद्धास्तान् शब्दान् सर्वतः समुच्चेतुम् ॥'"
—देशीनाममालायाम् [ गा ४ ]

३ नानाविधदेशभाषाज्ञ × × गुणशतकलितो योग्यः प्रवचनसार परिकथयितुम् ।

४ नानादेशी( देशभाषा )कुशलो नानादेशीकल्पस्य सूत्रस्य ।
अभिलापेऽर्थकुशलो भवति ततोऽनेन गन्तव्यम् ॥

भाषाचतुष्टये अपभ्रंश-स्थानम्

वाङ्मयस्य काव्यकायरूपाणां भाषाणां ना चातुर्विध्यमपि प्रतिपादित प्रतिष्ठिते पुरातनैस्तद्विद्भि खल्वपभ्रंशस्य प्रतिष्ठया। सातवाहननृपाश्रितगुणाढ्यकविविशेषणेऽप्येतद् द्योतित सम्भाव्यते[1]। तथा कविदण्डी–

" तदेतद् वाङ्मय भूय संस्कृत प्राकृत तथा।
अपभ्रंशश्च मिश्रं चेत्याहुरार्याश्चतुर्विधम्॥ "

—काव्यादर्शे [ अ १, ३२ ]

वि स ८३५ वर्षे दाक्षिण्यचिह्नोद्योतनाचार्य —

" ओयण्णिऊण य चिंतिय णेण—'अरे! कयलीए उण भासाए एय उल्लवियइ केणावि किंपि[2] हु अरे! सक्कंअ ताव ण होइ, जेण त अणेयपय–समास–णिवाउवसग्ग–विभत्ति–लिंगपरिअप्पणाकुवियप्पसगदुग्गम दुज्जणहियय पिव विसम।

इम पुण एरिस। ता किं पाययं होज्ज?। हु, तं पि णो जेण त सयलकलाकलाप(व)मालाजलकल्लोलसकुल लोयवुत्ततमहोअहिमहापुरिसम(मु)हणुग्गयामयणीसदबिंदुसदोह सघडिएएक्केक्कमवण्णापय–णाणारूवविरयणासह सज्जणवयण पिव सुहसगय।

एय पुण ण सुट्ठु। ता किं अवहंस होहिइ?। हु। त पि णो जेण [त] सक्कय–पाय–उभयसुद्धासुद्धपयसमतरंगरंगंतवग्गिर णवपाउसजलयपवाहपूरपवालियगिरिणइसरिस समविसम पणयकुवियपियपणइणीसमुल्लावसरिस मणोहर।

१ " इति श्रीमत्कुन्तलजनपदेश्वर–प्रतिष्ठानपत्तनाधीश–शतकर्णोपनामकद्वीपिकर्णीत्मज–मलयवतीप्राणप्रिय–कालापप्रवर्तक–शर्ववर्मधीसख–मलयवत्युपदेशपण्डितीभूत–त्यक्तभाषात्रय स्वीकृतपैशाचिकपण्डितराजगुणाढ्यनिर्मितभस्मीभवद्बृहत्कथाऽवशिष्टससमाशावलोकनप्राकृतादिवाकपक्षप्रीत–कविवत्सल–हालाद्युपनामकश्रीसातवाहननरेन्द्रनिर्मिता विविधान्योक्तिमयप्राकृतगीर्गुम्फिता शुचिरसप्रधाना काव्योत्तमा सप्तशत्यवसानमगात्॥' —गाथासप्तशतीप्रान्ते [ पि रि ३, ३४९ ]

२ आकर्ण्य च चिन्तितमनेन—अरे! कतरया पुनर्भाषयैतदुल्लप्यते केनापि किमपि?। हु। अरे! संस्कृत तावद् न भवति, येन तदनेकपद–समास–निपातोपसर्ग–विभक्तिलिङ्गपरिकल्पना कुविकल्पसङ्कदुर्गम दुर्जनहृदयमिव विषमम्।

इद पुनरीदृशम्। तत् किं प्राकृत भवेत्?। हु। तदपि नो येन तत् सकलकलाकलापमालाजलकल्लोलसङ्कुल लोकवृत्तान्तमहोदधि–महापुरुषमुखनिर्गतामृतनिस्यन्दबिन्दुसन्दोह सङ्घटितैकैकक्रमवर्ण–पद–नानारूपविरचनासह सज्जनवचनमिव सुखसङ्गतम्।

एतत् पुनर्न सुष्ठु। तत् किम् अपभ्रंश भविष्यति?। हु। तदपि नो येन [तत्] संस्कृत–प्राकृतोभयशुद्धाशुद्धपदसमतरङ्गरङ्गद्वल्गु नवप्रावृड्जलदप्रवाहपूरप्लावितगिरिनदीसदृश समविषम प्रणयकुपितप्रियप्रणयिनीसमुल्लापसदृश मनोहरम्।

देशभाषाणामपभ्रंशे निवेश — कुवलयमालाकर्तुरभिप्रेतमपभ्रंशलक्षण भाषाचतुष्टयेऽपभ्रंशस्थानमित्यत्राग्रे दृग्गोचर भविष्यति। पुरातनै प्राज्ञैर्देशभाषाणामपभ्रंशे समावेश पर्यदर्शि।

तथा रुद्रट —

'षष्ठोऽत्र भूरिभेदो देशविशेषादपभ्रंश ।' —काव्यालङ्कारे [ २, १२ ]

" देशेषु देशेषु पृथग् विभिन्न न शक्यते लक्षणतस्तु वक्तुम् ।
लोकेषु यत् स्यादपभ्रष्टसञ्ज्ञ ज्ञेय हि तद्देशविदोऽधिकारम् ॥"

—विष्णुधर्मोत्तरे [ ख ३ अ ७ ]

वाग्भट —

'अपभ्रंशस्तु यच्छुद्ध तत्तद्देशेषु भाषितम् ।' —काव्यालङ्कारे [ २, ३ ]

रामचन्द्र–गुणचन्द्रौ—

" देशोद्देशे स्वदेशगा । तिर्यग्जात्यन्तरादानामानुरूप्येण संकथा ।

देशस्य कुरु–मगधादेरुद्देश प्रकृतत्व तस्मिन् सति स्वस्वदेशसम्बन्धिनी भाषा निबन्धनीयेति । इय च देशगीश्च प्रायोऽपभ्रंशे निपततीति ॥"

—स्वोपज्ञविवरणोपेते नाट्यदर्पणे [ प १२४ ]

भाषात्रयेऽपभ्रंशस्थानम् — उपलभ्यमाने प्रमाणे प्रतीयते खलु विक्रमीयप्रथमशताब्द्या पूर्वमप्यपभ्रंशभाषाया गद्य–पद्यमयानि काव्यानि स्युरिति। छन्दो–लक्षण–काव्यालङ्कारानुशासकै पिङ्गल–भामह–स्वयम्भू–हेमचन्द्रप्रभृतिभिरन्यैरपि च भाषात्रये तत्काव्यसूचनमकारि। तथा च शकस ४०० तमवर्षीये धरसेन–ताम्रपत्रे—

' सस्कृत–प्राकृतापभ्रंशभाषात्रयप्रतिबद्धप्रबन्धरचनानिपुणतरान्त करण '

—वलभीराजगुहसेनविशेषणे [ इ ए १०, २८४ ]

भामह —

" शब्दार्थौ सहितौ काव्य गद्य पद्य च तद् द्विधा ।
सस्कृत प्राकृत चान्यदपभ्रंश इति त्रिधा ॥"—काव्यालङ्कारे [ १, १६ ]

" सस्कृत प्राकृत चैव गीत द्विविधमुच्यते ।
अपभ्रष्ट तृतीय च तदनन्त नराधिप ! ॥
देशभाषाविशेषेण तस्यान्तो नेह विद्यते ।"

—विष्णुधर्मोत्तरे [ ख ३, अ ३ ]

हेमचन्द्राचार्य —

" पद्य प्राय सस्कृत–प्राकृतापभ्रंश–ग्राम्यभाषानिबद्धभिन्नान्त्यवृत्त–सर्गाश्वास सन्ध्यवस्कन्धकबन्ध सत्सन्धि शब्दार्थवैचित्र्योपेत महाकाव्यम् ।

अपभ्रंशभाषानिबद्धसन्धिबन्धमब्धिमथनादि, ग्राम्यापभ्रंशभाषानिबद्धावस्कन्धकबन्ध भीमकाव्यादि ।" —काव्यानुशासने [ अ ८, १२०–७ ]

" तस्या राजासनम् । तस्य चोत्तरत संस्कृता कवयो निविशेरन् ।
पूर्वेण प्राकृता कवय ।
पश्चिमेनापभ्रंशिनः कवयः ।
दक्षिणतो भूतभाषाकवय । "
—काव्यमीमांसायाम् [ अ० १०, पृ ९४–९५ ]

वाग्भट —
" संस्कृत प्राकृत तस्यापभ्रंशो भूतभाषितम् ।
इति भाषाश्चतस्रोऽपि याति काव्यस्य कायताम् ॥"
—वाग्भटालङ्कारे [ प २, १,३ ]

भाषाषट्केऽपभ्रंश स्थानम् चण्ड–हेमचन्द्र–हृषीकेश–त्रिविक्रम–सिंहराज–लक्ष्मीधर–क्रमदीश्वर–शेषकृष्ण–मार्कण्डेयादिभिर्व्याकरणादिनाऽवबोधितासु षट्सु भाषास्वपभ्रंशभाषाऽपि प्राबोधि । अन्यैरपि च रुद्रट–भोजराज–जिनदत्तामरचन्द्रादिभिर्निजे निजे ग्रन्थे भाषाषट्क निर्दिश्य तत्रापभ्रंशस्य स्मरणमकारि । तथाहि चण्ड —

" संस्कृत प्राकृत चैवापभ्रंशोऽथ पिशाचिकी ।
मागधी शौरसेनी च षड् भाषाश्च प्रकीर्तिता ॥ "—प्राकृतलक्षणे ।

रुद्रट —
" वाक्य भवति द्वेधा गद्य छन्दोगत च भूयोऽपि ।
भाषाभेदनिमित्त षोढा भेदोऽस्य सम्भवति ॥
प्राकृत–संस्कृत–मागध–पिशाचभाषाश्च सू( शू )रसेनी च ।
षष्ठोऽत्र भूरिभेदो देशविशेषादपभ्रंश ॥ "
—काव्यालङ्कारे [ अ २, श्लो० ११–१२ ]

भोजराज —
" संस्कृतेनैव कोऽप्यर्थ प्राकृतेनैव चापर । शक्यो वाचयितु कश्चिदपभ्रंशेन वा पुन ॥
पैशाच्या शौरसेन्या च मागध्याऽन्यो निबध्यते।द्वित्राभि कोऽपि भाषाभि सर्वाभिरपि कश्चन॥'
—सरस्वतीकण्ठाभरणे ।

हेमचन्द्राचार्य —
' भाषा षट् संस्कृतादिका । '
"भाष्यन्ते भाषा संस्कृत–प्राकृत–मागधी–शौरसेनी–पैशाच्यपभ्रंशलक्षणा ।"
—अभिधानचिन्तामणौ [ का० २, श्लो० १९९ ]

एंय पुण ण सुट्ठु । किं पुण होहिइ त्ति चिंतयतेण पुणो समायण्णिअ । अरे अत्थि **चउत्था(त्थी) भासा पेसार्या,** ता सा इमा होहि त्ति ॥"

--कुवलयमालाकथायाम् [ जे भा ता प ९७, ९८ ]

भाषाचतुष्टयकवित्वविषये उपलभ्यन्तेऽन्येऽपीमे उल्लेखा । राजशेखर उद्धरति तदुक्तमित्युल्लिख्य प्राचीनमिदं पद्यद्वयम्--

"एकोऽर्थ संस्कृतोक्त्या स सुकविरचन प्राकृतेनापरोऽस्मिन्
अन्योऽपभ्रंशगीर्भि किमपरमपरो भूतभाषाक्रमेण ।
द्वित्राभि कोऽपि वाग्भिर्भवति चतसृभि किञ्च कश्चिद् विवेक्तु
यस्येत्थं धी प्रपन्ना(गल्भा) स्नपयति सुकवेस्तस्य कीर्तिर्जगन्ति ॥"

"गौडाद्या संस्कृतस्था परिचितरुचय प्राकृते लाटदेश्या
सापभ्रंशप्रयोगा सकलमरुभुवष्टक्कमादानकाश्च ।
आवन्त्या पारियात्रा सह दशपुरजैर्भूतभाषा भजन्ते
यो मध्येमध्यदेश निवसति स कवि सर्वभाषानिषण्ण ॥"

—काव्यमीमासायाम् [ अ ९, १०, ४८,५१ ]

राजशेखर --

"गिर श्रव्या दिव्या प्रकृतिमधुरा प्राकृतधुर
सुभव्योऽपभ्रंश सरसरचन भूतवचनम् ।
विभिन्ना पन्थान किमपि कमनीयाश्च त इमे
निबद्धा यस्त्वेषा स खलु निखिलेऽस्मिन् कविवृषा ॥"

--बालरामायणे [ १,११ ]

"समस्कृतमपभ्रंश लालित्यालिङ्गित पठेत् ।
प्राकृत भूतभाषा च सौष्ठवोत्तरमुद्गिरेत् ॥"

—काव्यमीमांसायाम् [ अ० ७, पृ ३३ ]

---

१ एतत् पुनर्न शुद्धम् । किं पुनर्भविष्यति ? इति चिन्तयता पुन समाकर्णितम् । अरे ! अस्ति चतुर्थी भाषा पैशाची । तत् सेयं भविष्यति इति ॥

क्रं २१)। तत्रापि सयममञ्जरी तु डॉ पी डी गुणेमहाशयेन भविष्यदत्तकथोपोद्घाते समुद्धृता। नेमिनाथचरित च डॉ हर्मण् याकोबीमहाशयेन निजभाषालिप्यां समपादि। वि स १२७४ वर्षेऽमरकीर्तिविरचित षट्कर्मोपदेशोऽन्येऽप्येतादृशा अवाप्यन्तेऽप्रसिद्धा ग्रन्था। अन्यदपि प्राप्यते यत्र तत्रोपदेश–कथा–चरित–प्रबन्धाद्यन्तर्गत नाटकालङ्कार–च्छन्द–स्तोत्रादिगत कुलकादिरूप च प्रसिद्धाप्रसिद्धमपभ्रंशवाङ्मयम्। महाकविपुष्पदन्तस्य त्रिषष्टिमहापुरुषगुणालङ्कारमहापुराण–नागकुमारचरित–यशोधरचरितानि, श्रीचन्द्रस्य कथाकोष, कनकामरस्य करकण्डुचरितम्, पद्मकीर्ते पार्श्वनाथपुराणम्, देवसेनस्य श्रावकधर्माचार, नयनन्दे सुदर्शनचरितम्, धवलस्य हरिवंशपुराणमित्यादीन्यपभ्रंशकाव्यानि प्रारम्भप्रान्तांशप्रदर्शनपूर्वं सूचितानि खलु मध्यप्रदेश–विरारसत्कपुस्तकसूच्यां रा ब श्रीयुतहीरालालमहाशयेन। इतराणि तु प्रेक्षिष्यन्त इत एव प्रकाश्यमानायां पत्तनीयजैनभाण्डागारसूच्यामिति नात्र तदंशा अवतार्यन्ते। गद्य पद्यमय प्राचीनमुदाहृतिरूप कियच्चात्र परिदर्श्यते।

**अपभ्रंश–वाङ्मयोदाहरणानि**

अपभ्रंशभाषाप्रसिद्ध ध्रुवकमुत्तराध्ययनादौ[1] जैनसिद्धान्तसूत्रेऽप्युपलभ्यते, यस्य स्मरण दाक्षिण्यचिह्नोद्योतनाचार्यादिना कुवलयमालाकथाऽऽदौ[2] हेमचन्द्राचार्यप्रभृतिभि छन्दोऽनुशासनादौ च व्यधायि[3]। सस्कृतादन्यदपभ्रंश इति पतञ्जलि दण्डिदर्शितपूर्वोक्तलक्षणानुसारेणापभ्रंशसञ्ज्ञिते प्राकृतलाक्षणिकैश्चार्षप्राकृतार्धमागधीति सञ्ज्ञया प्रख्यापिते प्राचीने जैनसिद्धान्ते तन्निर्युक्ति–भाष्य–चूर्णि–वृत्तिप्रभृतिषु तथाऽपभ्रंशलक्षणसिद्धे कथा-काव्यादौ चोपलभ्यन्तेऽपरिमिताः शब्दा येऽद्यावधि प्रयुज्यन्तेऽपभ्रंशापरनामधेयासु देशभाषासु। भूमिकागौरवभयात् कियदेवात्रोदाह्रियते—

---

१ "अधुवे असासयमि ससारमि दुक्खपउराए।
किं नाम होज्ज त कम्मय जेणाह दुग्गइ न गच्छेज्जा॥" —उत्तराध्ययने [८,१]

विक्रमीयैकादशशताब्द्यां विद्यमानो वादिवेतालशान्तिसूरिरस्य व्याख्यायामित्यमसूचयत्— "स हि भगवान् कपिलनामा स्वयम्बुद्धश्चौरसङ्घातसम्बोधनायम(दं) ध्रुवक सगीतवान्। ध्रुवकलक्षण चेदम्—

'ज गिज्जइ पुव्व(धुव) चिय पुण पुणो सव्वकव्वबधेसु।
धुवय ति तमिह तिविह छप्पय चउपय दुपय॥

एव च भगवतोद्गीते तेऽप्येनमेव ध्रुवक प्रत्युद्गायन्ति, ताल च कुट्टयन्ति।"
—उत्तराध्ययनबृहद्वृत्तौ [२८९–२९०]

२ एतदग्रे चर्चरीविमर्शे [भू पृ ११४] विलोकनीयम्।

३ 'सन्ध्यादौ कडवकान्त च ध्रुव स्यादिति ध्रुवा ध्रुवक घत्ता वति सज्ञान्तरम्।'
—छन्दोऽनुशासने [६,१].

जिनदत्तसूरि —

"संस्कृते प्राकृते चैव शौरसेने च मागधे। पैशाचकेऽपभ्रंशे च लक्ष्य लक्षणमादरात् ॥"

—विवेकविलासे [ उ ८, श्लो० १३१ ]

अमरचन्द्र —

"संस्कृत प्राकृत चैव शौरसेनी च मागधी। पैशाचिकी चापभ्रंश षड् भाषा परिकीर्तिता ॥"

—काव्यकल्पलतावृत्तौ [ प ८ ]

प्रसिद्धाप्रसिद्धम् अपभ्रंशवाङ्मयम्

अपभ्रंशभाषानिबद्ध वाङ्मय प्रभूतमुपलभ्यते, तत्र स्वल्पमेवाद्यावधि प्रसिद्धिमधिगतम्। श्रीम महोपाध्यायहरप्रसादशास्त्रिणा सम्पादिते बङ्गीयसाहित्यपरिषदा प्रकाशिते 'बौद्ध गान ओ दोहा'सञ्ज्ञके पुस्तके विविधकर्तृणि विक्रमीयसप्तमाष्टमशताब्दीसम्भूतानि काव्यानि बङ्गीयलिप्या प्रसिद्धिमधिगतानि। मुम्बापुरीराजकायसस्कृतग्रन्थमालया प्रकाशिते सुप्रसिद्धहेमचन्द्राचार्यस्य प्राकृतशब्दानुशासनसवलिते प्राकृतद्व्याश्रयमहाकाव्येऽन्यत्र प्रसिद्धे च्छन्दोऽनुशासनादौ च प्रतिष्ठा खल्वपभ्रंशपद्यानाम्। तथा योगीन्द्रदेवविरचितपरमात्मप्रकाश–योगचन्द्रमुनिप्रणीतयोगसारप्रभृतयो ग्रन्था अभयदेवसूरिप्रभृतिभि प्रणीता 'जय तिहुयण' इत्यादिसञ्ज्ञया प्रथिता स्तोत्रप्रबन्धाश्च प्रसिद्धा येऽपभ्रंशभाषाप्रतिष्ठा सूचयन्ति। धर्कटवणिग्धनपालविरचिता भविष्यदत्तकथा या दशमशताब्दीभवा वितर्क्यते, साऽस्यां ग्रन्थमालायां ( गा ऑ सिरीझ् क्र २० ) पूर्वं प्रसिद्धा, या डॉ हर्मण् याकोबीमहाशयेन जर्मनभाषाया रोमनलिप्या च प्राक् सम्पादिता। सोमप्रभाचार्येण वि स १२४१ वर्षे सन्दर्भित कुमारपालप्रतिबोधग्रन्थोऽस्यां ग्रन्थमालायां ( गा ऑ सिरीझ् क्र १४ ) प्रसिद्धस्तत्रापि कियानशोऽपभ्रंशभाषायामिति मुविदित विदुषाम्। इत एव प्रकाशिते प्राचीनगुर्जरकाव्यसङ्ग्रहे प्रसिद्धानि द्वादश–त्रयोदश–चतुर्दश-पञ्चदशशताब्दीजातानि गद्य–पद्यरूपाणि काव्यानि तत्सदृशान्यपराण्यपि चापभ्रंश सञ्ज्ञयाऽपि वक्तु शक्यते रुद्रट–वाग्भट–रामचन्द्रादिमतेन।

वि स ११७४ वर्षे यशोदेवोपाध्यायेन नवतत्त्वभाष्यविवरणे [ ९१ ] मुकुटसप्तमी-सन्धि–माणिक्यप्रस्तारिकाप्रतिबद्धरासयोर्नामनी सूचिते। एव सम्प्रदत्तचरमपि श्रीहेमचन्द्राचार्येण काव्यानुशासने [ अ ८, पृ ३३७ ] समसूचि–' अपभ्रंशभाषानिबद्ध-सन्धिबन्ध अब्धिमथन–भीमकाव्यादि। वि स ११२३ वर्षे सिद्धसेनसूरिणा साधारणाङ्केन सन्दर्भिता विलासवतीकथा, वि स १२१६ वर्षे कुमारपालराज्ये हरिभद्रसूरिणा रचित नेमिनाथचरितम्, महेश्वरसूरिणा निर्मिता सयमनञ्जरी चापभ्रंशभाषाया जेसलमेरुदुर्गीयभाण्डागारे विद्यते इति परिदर्शितमस्माभिरस्या ग्रन्थमालाया ( गा ऑ सिरीझ्

† " संता विसय जु परिहरइ, बलि किज्जउ हउ तासु ।
सो दइवेण जि मुंडियउ, सीसु खडिल्लउ जासु ॥"

‡ " पचह णायकु वसि करहु, जेण होंति वसि अण्ण ।
मूल विणट्ठइ तरुवरह, अवसइ सुक्कहिं पण्ण ॥"

—परमात्मप्रकाशे [ गा ८६,२७०,२७१ ]

* " भल्लाहं वि णासंति गुण जह संसग्गु खलेहिं ।
वइसाणरु लोहह मिलिउ तें पिट्टियइ घणेहिं ॥

*जोइय ! मो(लो, णे, दे)हु परिच्चयहि, मो(लो, णे, दे)हु ण भल्लउ होइ ।
मो( लो, णे, दे )हासत्तउ सयलु जगु, दुक्खु सहंतउ जोइ ॥"

—परमात्मप्रकाशे [ २३७,२३८,२४३,२४५,२८३ ]

निरहाङ्कहरिभद्रसूरिरुदाहरद्— " केणावि उग्गीय—
जइ फुल्ला कणियारया चूयय ! अहिमासमयमि घुट्ठमि ।
तुह न खम फुल्लेउं जइ पच्चंता करिंति डमराइं ॥ "

---

† उदाहरदिद पद्य पाठान्तरेण हेमचन्द्राचार्य —
"संता भोग जु परिहरइ तसु कन्तहो बलि कीसु ।
तसु दइवेण वि मुण्डियउ, जसु खल्लिहडउ सीसु ॥ "—सिद्धहेम० [८।४।३८९]

१ सतो विषयान् य परिहरति बलिं कुर्वेऽहं तस्य ।
स दैवेनापि मुण्डित शीर्ष खल्वाट यस्य ॥

‡ किञ्चित् पाठान्तरेण प्रादर्शयदिद पद्य हेमचन्द्राचार्य —
" जिब्भिन्दिउ नायगु वसि करहु, जसु अधिनइं अनइं ।
मूलि विणट्ठइ तुंबिणिहे अवसें सुक्कइं पण्णइं ॥"—सिद्धहेम० [ ८।४।४२७ ]

२ पञ्चाना नायक वशे कुरु येन भवन्ति वशेऽन्यानि ।
मूले विनष्टे तरुवरस्यावश्य शुष्यन्ति पर्णानि ॥

* कुवलयमालोक्तसूचनानुसारेण [भूमिका पृ ९३] 'भल्लाइं' 'भल्लउ' शब्दप्रयोगाद् गूर्जरदेश्यम् ।

३ भद्राणामपि नश्यन्ति गुणा यथा संसर्गे खले ।
वैश्वानरो लोहेन मिलितस्तेन पिट्टय( हन्य )ते घनै ॥

४ योगिन् ! मोह (लोभ, स्नेह, देह) परित्यज मोह (लोभ स्नेह , देहो) न भद्रो भवति ।
मोहा( लोभा- स्नेहा- देहा- )सक्त सकल जगत्, दु ख सहमान पश्य ॥

५ केनाप्युद्गीतम्—यदि पुष्पिता कर्णिकारकाश्चूतक ! अधिकमास घुष्टे ।
तव न क्षम पुष्पितु यदि प्रत्यन्ता कुर्वन्ति डमराणि ॥

जवा लोहमया चेव चावेयव्वा सुदुकर । जेहा दुक्ख भरेउं जे होइ वायस्स कोत्थलो।
भायरा मे महाराय ! सगा जिट्ठ–कणिट्ठगा । पुँल्लेव मुट्ठी जह से असारे ।
—उत्तराध्ययने [ अ १९,३८,४० २०,२१,४२]

शय्यम्भवसूरि —
" तहेव होले ! गोलि त्ति साणे ! वा वसुलि त्ति अ ।
दमए ! दुहए ! वा वि नेव भासिज्ज पन्नव ॥
हले ! हलि त्ति अन्नि त्ति भट्टे ! सामिणि ! गोमिणि ! ।
होले ! गोले ! वसुलि त्ति इत्थिअ नेवमालवे ॥ " +
—दशवैकालिकसूत्रे [ आ समितिप्र २१९ ]

भद्रबाहुसूरि —
" लद्धिल्लिअ च बोहिं अकरिंतो णागय च पत्थतो ।
दच्छिसि जह त विब्भल ! इम च अन्न च चुकिहिसि । "
गीतिका—सुट्ठु वाइय सुट्ठु गाइय सुट्ठु नच्चिय सामसुदरि ! ।
अणुपालिय दीहराइयओ सुमिणते मा पमायए ॥ "
—आवश्यकनिर्युक्तौ [ गा १०९९, १२९० ]

योगीन्द्रदेव —
* " कालु लहेविणु जोइया ! जिमु जिमु मोहु गलेइ ।
तिमु तिमु दसणु लहइ जिउ णियमें अप्पु मुणेइ ॥"

---

१ यथा लोहमयाश्चैव चर्वयितव्या सुदुष्करा । २ यथा दुःशको भर्तुं भवति वातस्य कोष्ठ ।
३ भ्रातरो मे महाराज ! स्वका ज्येष्ठ–कनिष्ठका । ४ रिक्तेव मुष्टिर्यथा सोऽसार ।
५ तथैव होले ! गोले इति साणे ! वा वसुले इति च ।
दमए ! दुहए ! वाऽपि नैव भाषेत प्रज्ञावान् ॥
६ हले ! हले इति अन्ने इति भट्टे सामिणि ! गोमिणि ! ।
होले ! गोले ! वसुले इति स्त्रिय नैवमालपेत् ॥
+ हरिभद्रसूरि —' इह होलादिशब्दास्तत्तद्देशप्रसिद्धितो नैष्ठुर्यादिवाचका । तथा होले गोले वसुले इत्येतान्यपि नानादेशापेक्षया आमन्त्रणवचनानि(न्य)गौरवकुत्सादिगर्भाणि वर्तन्ते ।'
—दश॰ व्याख्यायाम् ।
७ लब्ध च बोधिमकुर्वन्ननागत च प्रार्थयमान ।
द्रक्ष्यसि यथा तद् विह्वल ! अस्माच्चान्यस्माच्च भ्रंशिष्यसि ॥
८ सुष्ठु वादित सुष्ठु गीत सुष्ठु नर्तित श्यामसुन्दरि ! ।
अनुपाल्य दीर्घरात्री स्वप्नान्ते मा प्रमादी ॥
* उद्धरति स्मेद पद्य चण्ड प्राकृतलक्षणे [पृ ४७] इति योगीन्द्रदेवस्य चण्डात् प्राचीनता प्रतिभाति ।
९ काले सम्प्राप्ते योगिन् ! यथा यथा मोहो गलति ।
तथा तथा दर्शन लभते जीवो नियमेनात्मान जानाति ॥

[1]अण्णेण भणिय—वर्णि ! कीदृशं तत्र भोजनं ?

„ „ चाई भट्टो ! मम भोजन स्पृष्ट तक्षको इ न वासुकि ।

„ „ कत्तु घडाति तउ हद्धय उल्लाव भोजन स्पृष्ट स्वनाम सिंघसि ?

„ „ —अरे रे वड्डो( चट्टो )महामूर्ख ! ये पाटलिपुत्र-महानगरावास्तव्ये ते कुत्था समासोक्ति बुज्झति ?

„ „ —अस्मादपि इअ मूक्खतरी ।

„ „ काइ कज्ज ?

तेण भणिअ—अनिपुणनिपुणाथोक्तिप्रचुर ।

„ „ नर काइ, मां शुक्क( शुक्ल )अश्वोपि विदग्धः साति ।

अण्णेअ भणिअ—भट्टो ! सत्य त्व विदग्धः, किं पुणु भोजने स्पृष्ट माम कथित ।

तेण भणिअ—अरे महामूर्खः वासुकेर्वेदनसहस्र कथयति ।

कुमारेण य चिन्तिअ-'अहो ! असवद्धक्खरालापत्तण बालदेसिआण । अहवा को अण्णो वापारो इमाण परपिण्डपुट्ठदेहाण विज्जा-विण्णाण-णाण-विणयविरहिआण च-ट्टरसायण मोत्तूण' चिंतयतस्स भणियमण्णेण चट्टेण—

---

[1] अन्येन भणितम्-वर्णिन् ! कीदृश तत्र भोजनम् ?

„ „ —त्यागिन् भट्ट ! मम भोजन स्पृष्टम्, तक्षकोऽह न वासुकि ।

„ „ —कुतो घटते तव हा धिक् उल्लापो भोजने पृष्टे स्वनाम कथयसि ?

„ „ —अरे रे चट्ट महामूर्ख ! ये पाटलिपुत्रमहानगरवास्तव्यास्ते कुत्र समासोक्ति बुध्यन्ते ।

„ „ —अस्मादपीयं मूर्खतरी ।

„ „ —कुत कार्यात् ?

तेन भणितम् —अनिपुण-निपुणार्थोक्तिप्रचुर ।

„ „ —नर कथम्, मम शुक्रोऽश्वोऽपि विदग्धोऽस्ति ।

अन्येन भणितम्-भट्ट ! सत्य त्व विदग्ध , किं पुनर्भोजने स्पृष्ट मम कथय ।

तेन भणितम्-अरे ! महामूर्खो वासुकेर्वदनसहस्र कथयति ।

कुमारेण च चिन्तितम्-अहो ! असम्बद्धाक्षरालापित्व बालदेश्यानाम् । अथवा कोऽन्यो व्यापार एषा परपिण्डपुष्टदेहाना विद्या-विज्ञान-ज्ञान-विनयविरहितानां चट्ट(वार्ता)रसायन मुक्त्वेति चिन्तयति भणितमन्येन चट्टेन—

"वररुई डिंभरूवाणि मोयगे दाऊण इम पाढेइ—

* राय नंदु नवि जाणइ ज सगडालो काहिइ ।
राय नंद मारेत्ता तो सिरिय रज्जे ठवेहिइ ॥"

"[2]सा भणइ—

न दुक्कर तोडिय अवलुबिया न दुक्कर नच्चिउ सिक्खियाए ।
त दुक्कर त च महाणुभाव ज सो मुणी पमयवणमि वुच्छो ॥"

—आवश्यकसूत्रवृत्तौ [ पृ ६९७,६९४,६९७ ]

"ईरि(र)मदिरपण्णहारओ मह कतु गतो वणिजारओ ।
वरिसाण सय च जीवउ मा जीवतु घर कयाइ एउ ॥"

—दशवैकालिकटीकायाम् [ पृ ९८ ]

वि स ८३९ वर्षे दाक्षिण्यचिह्नोद्यतनाचार्य —

"[4]रे रे आरोट्ट ! भण रे जाव ण पम्हुसइ । जनार्दन पुच्छह कत्थ तुज्झे कल्ल जिमिअल्लया ?। तेण भणिउ--साहिउ जे तेतउतस्स वलक्ख-इएल्लयह तणए जिमिअल्लया । तेण भणिय-किं सा विसेमहिला वलक्ख-इएल्लिअ ? । तेण भणिउ—अहहा ! सा य भडारिअ सपूर्ण स्वलक्खण गायत्रि पहसिअ ।

---

* वि स १०५५ वर्षे वर्धमानसूरिरिदमित्थमुदाहरति स्म—

'राय णदो णवि जाणति ज सगडालु करेसइ । राय णदु मारेत्ता सिरियउ रज्जे ठवेसइ ॥'

—उपदेशपदव्याख्यायाम् [ ह प ५४ ]

वि स ११७४ वर्षे मुनिचन्द्रसूरि —

"एउ लोउ नवि याणइ ज सगडालु करेसइ । नदु राउ मारेविणु सिरियउ रज्जि ठवेसइ ।"

—उपदेशपदवृत्तौ [ ८७ ]

भद्रेश्वरसूरि —

"एउ सगडालो भणइ ज सगडाउ करिस्सइ । नदराओ मारेविणु सिरियउ रज्जे ठविस्सइ ॥"

—कथावल्याम् [ पत्तनीयता २६० ]

१ वररुचि डिम्भरूपेभ्यो मोदकान् दत्त्वेद पाठयति—
राजा नन्दो नैव जानाति यत शकटाल करिष्यति ।
राजान नन्द मारयित्वा श्रीयक राज्ये स्थापयिष्यति ॥

२ सा भणति—न दुष्कर त्रोटिताऽऽम्रलुम्बिका न दुष्कर नर्तित शिक्षितया ।
तद् दुष्कर तच्च महानुभाव यत् स मुनि प्रमदावन उषित ॥

३ ईरमदिरपणहारको मम कान्तो गतो वणिजारक ।
वर्षाणां शत च जीवतु मा जीवन् गृह कदापि एतु ॥

४ "रे रे आरोह ! भण रे ! यावद् न विस्मरति । जनार्दन ! पृच्छामि कुत्र यूय कल्ये जिमितवन्त । तेन भणितम्—कथयामि, य स तस्य(?) बलक्षयितस्य गृहे(?) जिमितवन्त । तेन भणितम् किं सा वैश्यमहिला बलक्षयिता (?) । तेन भणितम्-अहह ! सा च भट्टारिका सम्पूर्ण सुलक्षणा गायत्री भारती ।

'अण्णेण भणिय—वर्णि ! कीदृशं तत्र भोजनं ?

,,  ,,  चाई भट्टो ! मम भोजन स्पृष्ट तक्षको ह न वासुकि ।

,,  ,,  कत्तु घडति तउ हद्धय उल्लाव भोजन स्पृष्ट स्वनाम सिंघसि ?

,,  ,, —अरे रे वड्डो( चट्टो )महामूर्ख ! ये पाटलिपुत्र-महानगरावास्तव्ये ते कुत्था समासोक्ति बुज्झति ?

,,  ,, —अस्मादपि इअ मूक्र्खतरी ।

,,  ,,  काइ कज्ज ?

तेण भणिअ—अनिपुणनिपुणाथोक्तिमचुर ।

,,  ,,  नर काइ, मां मुक्त( शुक्ल )अश्वोपि विदग्धः साति ।

अण्णेअ भणिअ—भट्टो ! सत्य त्व विदग्धः, किं पुणु भोजने स्पृष्ट माम कथित ।

तेण भणिअ—अरे महामूर्खः वासुकेर्वदनसहस्र कथयति ।

कुमारेण य चिन्तिअ—'अहो ! असवद्धक्खरालापत्तण वालदेसिआण । अहवा को अण्णो वापारो इमाण परपिण्डपुट्ठदेहाण विज्जा–विण्णाण–णाण–विणयविरहिआण च–ट्टरसायण मोत्तूण ' चिंतयतस्स भणियमण्णेण चट्टेण—

---

१ अन्येन भणितम्–वर्णिन् ! कीदृश तत्र भोजनम् ?

,,  ,,  —त्यागिन् भट्ट ! मम भोजन स्पृष्टम्, तक्षकोऽह न वासुकि ।

,,  ,  —कुतो घटते तव हा धिक् उल्लापो भोजने पृष्टे स्वनाम कथयसि ?

,,  ,,  —अरे रे चट्ट महामूर्ख ! ये पाटलिपुत्रमहानगरवास्तव्यास्ते कुत्र समासोक्ति बुध्यन्ते ।

,,  ,,  —अस्मादपीय मूर्खतरी ।

,,  ,  —कुत कायात् ?

तेन भणितम्  —अनिपुण–निपुणार्थोक्तिप्रचुरा ।

,,  ,,  —नर कथम्, मम शुक्लोऽश्वोऽपि विदग्धोऽस्ति ।

अन्येन भणितम्–भट्ट ! सत्य त्व विदग्ध , किं पुनर्भोजने स्पृष्ट मम कथय ।

तेन भणितम्–अरे ! महामूर्खो वासुकेर्वदनसहस्र कथयति ।

कुमारेण च चिन्तितम्–अहो ! असम्बद्धाक्षरालापित्व मालदेश्यानाम् । अथवा कोऽन्यो व्यापार एषा परपिण्डपुष्टदेहाना विद्या–विज्ञान–ज्ञान–विनयविरहिताना चट्ट(वार्ता)रसायन मुक्त्वेति चिन्तयति भणितमन्येन चट्टेन—

[1]भो भो भट्टउत्ता ! तुम्हे ण याणह यो राजकुले वृत्तात ?

तेहिं भणिय--भण हे व्याघ्रस्वामि ! क वार्ता राजकुले ?

तेण भणिय--कुवलयमालाए पुरिसद्देपिणीए पातओ लबित ।

इम च सोऊण अप्फोडिऊण एक्को उट्ठिउ चट्टो । भणिअ च णेण-
यदि पाडित्येन ततो मइ परिणेतव्य कुवलयमाल ।

अण्णेण भणिय--अरे ! कवणु तउ पाण्डित्यु ? ।

तेण भणिअ--षडगु पढमि, त्रिगुण मन्त्र पढमि, किं न पाण्डित्यु ?

अण्णेण भणिअ--अरे ! ण मन्तेहिं तगुणेहिं परिणिज्जइ, जो सहितौ
पातौ भिं(विं)दइ सो त परिणेति ।

अण्णेण भणिय--अह सहितउ ज्जो ग्वाथी पढमि ।

तेहिं भणिअ--कइसी रे व्याघ्रसामि ! गाथः ?

तेण भणिअ--इम ग्वाथ--

सा ते भवतु सुप्रीता अबुधस्य कुतो बल ?

यस्य यस्य यदा भूमि सर्वत्र मधुसूदनः ॥

त च सोऊण अण्णेण सकोप भणिअ--

अरे अरे मूर्ख ! स्कधकोपि गाथ भणसि ! अम्ह गाथ ण पुच्छह ।

---

१ भो भो भट्टपुत्रा यूय न जानीथ यो राजकुले वृत्तान्त ?

तैर्भणितम्-भण हे व्याघ्रस्वामिन् ! का वार्ता राजकुले ?

तेन भणितम्-कुवलयमालया पुरुषद्वेषिण्या पादो लम्बित ।

इद च श्रुत्वाऽऽस्फोट्यैक उत्थितश्चट्ट । भणित चानेन-
यदि पाण्डित्येन ततो मया परिणेतव्या कुवलयमाला ।

अन्येन भणितम्-अरे ! कीदृक् तव पाण्डित्यम् ?

तेन भणितम्-षडङ्ग पठामि, त्रिगुण मन्त्र पठामि, किं न पाण्डित्यम् ?

अन्येन भणितम्-अरे ! न मन्त्रैस्त्रिगुणै परिणीयते, य सहृदय पादान् भिनत्ति(वेत्ति) स ता परिणयति ।

अन्येन भणितम्-अह सहृदयो यो गाथा पठामि ।

तैर्भणितम्-कीदृशी रे व्याघ्रस्वामिन् ! गाथा ?

तेन भणितम्-इय गाथा—

इद च श्रुत्वाऽन्येन सक्रोध भणितम्-अरे अरे मूर्ख ! स्कन्धकमपि गाथा भणसि ! अस्मान् गाथा न पृच्छथ ।

'तेहिं भणिअ—त्व पठ भट्टो यजुस्वामि ! गाथः ।

तेण भणिय—सुट्ठु पढमि—

आए कप्पे मत्त गय गोदावरि ण मुयंति ।

को तहु देसहु आव( प )तति को व पराणति वात्त ॥

अण्णेण भणिअ—अरे ! सिलोगो अम्हे ण पुच्छह ग्वाथी । पठहो ।

तेण भणिअ—सुट्ठु पढमि—

तवोलरइयराउ अहरो कामिनिं दट्ठा ।

अम्ह चिअ क्खुभइ मणो दारिद्रगुरू णिवारेइ ॥

तउ सव्वेहि त्रि भणिअ—अहो ! भट्ट यजुस्वामि विदग्ध पडितु विंद्यावतो ग्वाथी पढति, एतेन सा परिणेतव्या ।

अण्णेण भणिय—अरे ! केरिसो सो पातउ जो तीय लवितु ।

तेण भणिउ—राजागणे मइ पठितु आसि, सो से विस्मृतु, सव्वु लोक्कु पढति त्ति ॥

इम च सोऊण चट्टरसायण चिंतिय रायउत्तेण-अहो ! अणाहवट्टिआण असबद्धपलावत्तण चट्टाण ति ॥"

—कुवलयमालाकथायाम् [ जे मा ता १३०,१३१ ]

---

१ तैर्भणितम्-त्व पठ भट्ट यजुस्वामिन् ! गाथाम् ।

तेन भणितम्-सुष्ठु पठामि—

आदौ कल्पे मूर्ति गता गोदावरीं न मुञ्चन्ति ( ? )।

कस्तस्माद् देशादापतति को वा पर्याणयति वार्ताम् ? ॥

अन्येन भणितम्-अरे ! श्लोक, अस्मान् न पृच्छथ गाथा पठामि ।

तेन भणितम्-सुष्ठु पठामि—

ताम्बूलरचितरागमधर कामिन्या दृष्ट्वा ।

अस्माकमपि क्षुभ्यति मनो दारिद्र्यगुरुर्निवारयति ॥

तत सर्वैरपि भणितम्-अहो ! भट्टयजुस्वामी विदग्धपण्डितो विद्यावान् गाथा पठति । एतेन सा परिणेतव्या ।

अन्यन भणितम्-अरे ! कीदृश स पादो यस्तया लम्बित ।

तेन भणितम्-राजाङ्गणे मया पठित आसीत, स तु विस्मृत , सर्वो लोक पठतीति ।

इद च श्रुत्वा चट्ट(वार्ता)रसायन चिन्तित राजपुत्रेण-अहो ! अनाथवृत्तिकानामसम्बद्धप्रलापित्व चट्टानामिति ॥

[1]"सयल पुहईमडल परिभमिऊण सपत्तो महुराउरीए । एत्थ एकम्मि अणाह-मण्डवे पविट्ठो । अवि य तत्थ ताव मिलियालए कोढ्ढीए । वळक्खखइयए । दीण दुग्गय । अधलय । पगुलय । मंदुलय । मडहय । वामणय । छिण्णणासय । तोडियकण्णय । छिण्णोट्ठय । तडिय । कप्पडिय । देविय । तित्थयत्तिय । लेहाराय । धम्मिय । गुग्गुलिय । भो(लो)या । किं च बहुणा जो माउ पिउ-रुट्ठेल्लउ सो सो सव्वो वि तत्थ मिलिएल्लउ त्ति । ताह च तेत्थु मिलिएलय सह समाणह एक्केक्क महाआलावा पयत्ता । भो भो । कयरहिं तित्थे दे[वि] वा गयाह कयरा वाहि पाव वा पिट्टइ त्ति । एक्केण भणिअ—अमुक्का वाणारसी कोढिएहिं । तेण वाणारसीगयाण कोढु पिफट्टइ त्ति ।

अण्णेण भणिअ—हुं हुं कहिउ वुत्तंतउ तेण जपिएल्लउ । कहिं कोढ । कहिं वाणारसि । मूलत्थाणु भडारउ भो(?को)ढइ जे देइ । उद्दालि कोअहु ।

अण्णेण भणिअ—रे रे जइ शू(मू)लत्थाणु देइ उद्दालइज्ज कोढइ । ता पुणु काइ कज्जु अप्पाणु कोढिअल्लउ अच्छइ ?

अण्णेण भणिअ—जा ण कोढिएल्लउ अच्छइ ता ण काइ कज्जु । महाकालु भडारउ छम्मास सेवण्ण कुणइ । जेण शू(मू)लहेज्जे फिट्टइ ।

अण्णेण भणिअ—काइ इमेण जत्थ चिरपरूढ पाउ फिट्टइ, तुब्भे उद्दि-सह तित्थ ।

---

१ सकल पृथ्वीमण्डल परिभ्रम्य सम्प्राप्तो मथुरापुर्याम् । अत्रैकस्मिन्ननाथमण्डपे प्रविष्ट । अपि च तत्र तावन्मिलिता कुष्ठिनो वलक्षक्षयिन (?) दीन दुर्गता । अन्धा । पङ्गुला । मन्दा । ह्रस्वका । वामना । छिन्ननासिका । त्रोटितकर्णा । छिन्नोष्ठा । तटिका (?) । कार्पटिका । देविका । तीर्थयात्रिका । लेखका । धार्मिका । गुग्गुलिका । लोका । किञ्च बहुना यो मातृ पितृरुष्ट स स सर्वोऽपि तत्र मिलित इति । तेषां च तत्र मिलिते सह प्रत्येक महालापा प्रवृत्ता । 'भो भो ! कतरे तीर्थे दे[वि] वा गतानां कतरो व्याधि पापं वा भ्रश्यति' इति । एकेन भणितम्—'अमुका वाराणसी कुष्ठिभि । तत्र वाराणसीगतानां कुष्ठं भ्रश्यति इति । अन्येन भणितम्—हु हु कथितो वृत्तान्तस्तेन जल्पित । क्व कोढः । क्व वाराणसी । मूलस्थानभट्टारक कुष्ठान् यो ददाति उद्दालयति(?) लोकानाम् ।

अन्येन भणितम्—रे रे । यदि मूलस्थानुरेव उद्दालयति (?) कुष्ठान्, तदा पुन किं कार्यं वयं कुष्ठिन आस्महे ?

अन्येन भणितम्-यो न कुष्ठी आस्ते, तस्य न किंचित् कार्यम् । महाकालभट्टारकस्य षण्मासान् सेवां करोति येन मूलादेव भ्रश्यति ।

अन्येन भणितम्-किमनेन ? यत्र चिरारूढं पापं भ्रश्यति, पूयमुद्दिशत तीर्थम् ।

[1]अण्णेण भणिअ–पयागवडपडिअहं चिरपरूढ पाय वि हत्थ वि फिट्टंति ।

,, ,, –अरे ! पाव पुच्छिय पाय साहहि ?

,, ,, –खेदु मेल्लह । जइ परमाइ पिइवहकयइं पि महापावइ गंगासंगमे ण्हायह भइरवभडारयपडिअह णासइ त्ति ।

—कुवलयमालाकथायाम् [ जे भा ता ४३–४४ ]

"[2]तेउ भणिय एक्केण गाममहत्तरेण—

एहु एहउ दुम्मणस्साहु । सव्व जे घु(यु) जाअरिदु । तुज्झा णउ* यक वलितउ । पारद्धउ एउ( तु ) मइ । सुगइ भ्रातु व( च )र भ्राति समतु ।

तउ अण्णेण भणिय—

थु जे विरइदु धणलवासा त सुहलप्पडे एतु मइ दुत्थद्दमणमोहलुद्धउ तु समति ओलितउं । एतु(उ) एतु(उ) पारद्धु भल्लउं * ।

तउ अण्णेण भणिअ चिरजराजुण्णदेहेण—

एत्थ सुज्झति किर सुवण्ण रे* वइसाणरमुहगतउं कउ पाउ मित्तस्स वयण । कामालिअव्रतधरणे एतु(उ) पाउ तुज्झे प्पणाहिय ।

तउ सयलद्दगसामिणा भणिअ जेट्ठमहामयहरेण—

---

१ अन्येन भणितम्–' प्रयागवटपतितानां चिरप्ररूढौ पादावपि हस्तावपि भ्रश्यत ।'

अन्येन भणितम्–' अरे पाप पृष्टः पादौ कथयसि ? '

अन्येन भणितम्–खेदो मुच्यताम् । यदि परमाणि पितृवधकृतान्यपि महापापानि गङ्गासङ्गमे स्नातानां भैरवभट्टारकपतितानां नश्यन्ति । ' इति ।

२ ततो भणितमेकेन ग्राममहत्तरेण–एतदेतादृग दौर्मनस्य खलु सर्वं यत् त्वयाऽऽचरितम् । तव वक्र व(च)लितम् । प्रारब्धमेतत् प्रति सुगतिं भ्राता वर भ्रात सम्प्रति(?) ।

ततोऽन्येन भणितम्—

त्वया यद् विरचित धनलवाशया तया सुखलम्पटेनैत प्रति । दुष्टार्थ-मनोमोहलुब्धस्त्व सम्प्रत्य भ्रवी एतत् एतत् प्रारब्ध भद्रम् ।

ततोऽन्येन भणित चिरजराजीर्णदेहेन—

अत्र शुध्यति किल सुवर्णं रे वैश्वानरमुखगत कृत पाप मित्रवचनस्य ? कापालिकव्रतध रणे एतत् पाप तव प्रणङ्क्ष्यति ।

तत सकलद्रङ्गस्वामिना भणित ज्येष्ठमहामहत्तरेण—

* कुवलयमालाकथोल्लेखानुसारेण [ भूमिका पृ ९३ ] गुजरदेश्यमेतत् ।

[1]"सयल पुहईमंडल परिभमिऊण सपत्तो महुराउरीए । एत्थ एक्कम्मि अणाह मण्डवे पविट्ठो । अवि य तत्थ ताव मिलियाल्लए कोड्डीए । वलक्ख खइयए । दीण दुग्गय । अधलय । पंगुलय । मदुलय । मडहय । वामणय । छिण्णणासय । तोडियकण्णय । छिण्णोट्ठय । तडिय । कप्पडिय । देविय । तित्थयत्तिय । लेहाराय । धम्मिय । गुग्गुलिय । भो(लो)या । किं च बहुणा जो माउ पिउ-रुट्ठेल्लउ सो सो सव्वो वि तत्थ मिलिएल्लउ त्ति । ताह च तेत्थु मिलिएलय सह समाणह एक्केक महाआलावा पयत्ता । भो भो ! कयरहिं तित्थे दे[वि] वा गयाह कयरा वाहि पाव वा पिट्टइ त्ति । एक्केण भणिअ–अमुक्का वाणारसी कोढिएहिं । तेण वाणारसीगयाण कोढु प्फिट्टइ त्ति ।

अण्णेण भणिअ– हु हु कहिउ वुत्तंतउ तेण जंपिएल्लउ । कहिं कोढ । कहिं वाणारसि । मूलत्थाणु भडारउ भो(?को)ढइ जे देइ । उद्दालि लोअहु ।

अण्णेण भणिअ–रे रे जइ शू(मू)लत्थाणु देइ उद्दालइज्ज कोढइ । ता पुणु काइ कज्जु अप्पाणु कोढिअल्लउ अच्छइ ?

अण्णेण भणिअ–जा ण कोढिएल्लउ अच्छइ ता ण काइ कज्जु । महाकालु भडारउ छम्मास सेवण्ण कुणइ । जेण शू(मू)लहेज्जे फिट्टइ ।

अण्णेण भणिअ–काइ इमेण जत्थ चिरपरूढ पाउ फिट्टइ, तुम्भे उद्दिसह तित्थ ।

---

1 सकल पृथ्वीमण्डल परिभ्रम्य सम्प्राप्तो मथुरापुर्याम् । अनेकस्मिन्ननाथमण्डपे प्रविष्टः । अपि च तत्र तावन्मिलिता कुष्ठिनो बलाक्षक्षयिन (?) दीन दुर्गता । अन्धा । पङ्गुला । मन्दा । लघुका । वामना । छिन्ननासिका । त्रोटितकर्णा । छिन्नोष्ठा । तटिका (?) । कार्पटिका । दविका । तीर्थयात्रिका । लेखका । धार्मिका । गुग्गुलिका । लोका । किञ्च बहुना यो मातृ पितृरुष्ट स स सर्वोऽपि तत्र मिलित इति । तेषा च तत्र मिलिते सह प्रत्येक महालापा प्रवृत्ता । 'भो भो ! कतरे तीर्थे द[वि] वा गतानां कतरो व्याधि पापं वा भ्रश्यति' इति । एकेन भणितम्–'अमुका वाराणसी कुष्ठिभि । तेन वाराणसीगतानां कुष्ठे भ्रश्यति इति । अन्येन भणितम्–हु हुं कथत्यो वृत्ता न्तस्तेन जल्पित । क्व कोढ । क्व वाराणसी । मूलस्थाणुभट्टारक कुष्ठान् यो दद उद्दालयति(?) लोकानाम् ।

अन्येन भणितम्–रे रे ! यदि मूलस्थाणुरेव उद्दालयति (?) कुष्ठान्, तदा पुन किं कार्यं वयं कुष्ठिन आस्महे ?

अन्येन भणितम्–यो न कुष्ठी आस्ते तस्य न किंचित् कार्यम् । महाकालभट्टारकस्य षण्मासान् सेवां करोति येन मूलादेव भ्रश्यति ।

अन्येन भणितम्–किमनेन ! यत्र चिररूढं पापं भ्रश्यति, यूयमुद्दिशत तीर्थम् ।

वि स १०९९ वर्षे वर्धमानसूरि —

" तथा च तन्मतम्—

' [2]ॐकारे विंदु उप्पज्जइ विंदुहे णाउ णाए से लिज्जइ ।
विंदुणाउ लउ जो परियाणइ अक्खरु अहव अणक्खरु जाणइ ॥
सो ननि छिप्पइ कलि–मलपावें । समरसिहूयउ ठाइ य भावें ॥ "

—उपदेशपदटीकायाम् [ ह प १९६ ]

वि स ११२३ वर्षे साधारणाङ्कसिद्धसेनसूरि —

" जॅण एकु खणतरु कठु देहु अक्खमि धमक्खरु त सुणेहु ।
जा य दूमिज्जइ अन्नु लोउ ता वरि किउ धमकहाविणोउ ॥
जाव य परतत्तिहिं जाइ कालु ता वरि परिभाविउ कमजालु ।
सव्वहो परदोसुग्घडणेण गुणु कवणु होइ चिंतहु मणेण ॥
सतोहु य अहव असतएहिं किं परदोसेहिं पयासिएहिं ।
लब्भइ जमु(सु) अत्थु न तेत्थु कोइ अनु नि सो चेन य वइरि होइ ॥
उप्पज्जइ परजण-पीड जेण त कज्जु न किज्जइ बुहजणेण ।
ज कमु हसतउ किर करेइ त रोवतु नि न नित्थर(रे)इ ॥"

" वामपासमि देवी नि वइसारिया दिव्ववा(था)लाइ उवणति भडारिया ।
कणय–मणि–रुप्पकचोलसपुन्नय कणयत्थाल कुमरस्स निथिन्नय ।
दक्ख खज्जूर खुडुहुडिय उत्तत्तिया दिन्न वरिसोलमव रायसजुत्तिया ।
भुजेवि किउ हत्थपक्खालण सिंधुलनणेण सह दिज्जए सालण ।
अव–टींटी–करीराइ करवदय विल्लिया कक्कड गज्जर अद्दय ।

१ विलोक्यताम् जे भा सूची [ पृ ६ ]

२ ॐकारे विन्दुरुत्पद्यते विन्दोनादो नादे स लीयते ।
विन्दु–नाद लय य परिजानाति अक्षरमथवाऽनक्षर जानाति।
स नैव स्पृश्यते कलिमलपापन । समरसीभूतस्तिष्ठति च भावेन ॥

३ अवलोकनीय जे भा सूच्याम् [ १४, १८ अप्रसिद्ध० ४५ ]

४ जना एक क्षणान्तर कण्ठ ( कण ) दत्त आख्यामि धर्माक्षर त शृणुत ।
यावद् दूयतेऽन्यो लोकस्तावद् वर कृतो धर्मकथाविनोद ॥
यावच्च परतप्तिभियाति कालस्तावद् वर परिभावित कर्मजालम् ।
सर्वथा परदोषोद्घटनेन गुण को भवति चिन्तयत मनसा ॥
सद्भिर्याथवाऽसद्भि किं परदोषै प्रकाशितै ? ।
लभ्यते यशो(शो)ऽत्र न तत्र कोऽपि अन्योऽपि स एव च वैरी भवति ॥
उत्पद्यते परजनपीडा येन तत् कार्य न क्रियते बुधजनेन ।
यत् कर्म हसन् किल करोति तद् रुदन्नपि न निस्तरति ॥

'धवलवाहण धवलदेहस्स सिरि भ्रमिति जा विमलजल। धवलुज्जल सा भडारी यति गंग मावेसि तुहु मित्रद्रोज्झु तो णाम सुज्झति।"

" *²ताव इम गीयय गीय गामणडीए—

जो जसु माणुसु वल्लहउ त जइ अण्णु रमेइ।
जइ सो जाणइ जीवइ पत्तो तहु माण लएइ॥"

×" ³राईए पच्छिमजामे केण नि गुज्जरपहिएण इम धवलदुवहय गीय। अवि य—

जो णवि विहुरे विमज्जणणउ धवलउ कड्ढइ मारु।
सो गोट्ठगणमण्डणउ सेसउ व ज सारु॥"

—कुवलयमालाकथायाम् [ जे भा ता ९१,३७,४७ ]

वि स ९२९ वर्षे⁴ शीलाङ्काचार्यविमेलमति —

"⁶सयणु परियणु बधुवग्ग पि भिच्चयणु। सुहि सज्जणु वि घरि कलत्तु आणापडिच्छउ॥
अत्थुम्ह किल घरि धरइ जाव। ताव पुण्णेहिं समग्गलु॥"

—चतुष्पञ्चाश महापुरुपचरिते [ ह प ४ ]

---

१ धवलवाहन–धवलदेहस्य शिरसि भ्राम्यति या विमलजला, धवलोज्ज्वला ता भट्टारिका यदि गङ्गा प्रविशसि त्व मित्रद्रोहस्तदा नाम शुध्यति॥

* रत्नप्रभसूरिरिद सस्कृत इत्थमन्ववादीत्—"तावदिद नद्या गीतम्—
इष्ट यन्मानुष यस्य तदन्येन रमेत चेत्। स जाननेवमीर्ष्यालुरादत्ते तस्य जीवितम्॥"
—कुवलयमालाकथासक्षेपे [ आ सभाप्र ३८ ]

२ तावदिद गीतक गीत ग्रामनद्या—
यो यस्य मनुष्यो वल्लभस्त यद्यन्यो रमते। यदि स जानाति जीवति प्राप्तस्तस्य प्राणान् गृह्णाति॥

× रत्नप्रभसूरिरिदमित्थमन्ववदत्–' पाश्चात्ययामे केनापि गूर्जरपथिकेन गीतम्—
धवल इव योऽत्र विधुर स्वजनो नो भारकर्षण प्रवण।
स च गोष्ठाङ्गणभूतलविभूषण केवल भवति॥
—कुवल्यमालाकथासक्षेपे [ आ सभाप्र ५३ ]

३ रात्र्या पश्चिमयामे केनापि गूर्जरपथिकेनेद धवलदुर्वहन्च गीतम्। अपि च—
यो नैव विधुर विमज्जको धवल कर्षति भारम्। स गोष्ठाङ्गणमण्डन शेष एव यत्सार॥

४ ज भां सूच्यामप्रसिद्धम धर्मग्रन्थपरिचय [ ४३-४४ ]

५ "नांदन सूत्रधार —आदिष्टोऽहमद्य साधुजनपदा यथाऽद्य त्वया कव शीलाकस्य विमलमत्यभिधानस्य कृति विबुधानद नाम नाटक एकमकप्रबन्धक नाटयितव्यमिति॥"
—चतुष्पञ्चाशन्महापुरुषचरिते [ ह ३१ ]

६ स्वजन परिजनो बन्धुवर्गोऽपि भृत्यजन। सुहृत् सज्जनोऽपि गृह कलत्रमाज्ञाप्रतीच्छकम्।
अर्थोऽस्माक किल गृह धारित यावत्। तावत् पुण्यै समर्गल॥

## काव्यत्रयी–परामर्शः ।

प्रस्तुताया काव्यत्रय्या कर्तृविषये कविगुरुविषये व्याख्यातृविषयेऽपभ्रंशभाषाविषये च वक्तव्यमुपरि प्रादर्शि । अथ तस्या रचनाऽऽदिविषयेऽपि किञ्चिद् वक्तव्यमुचितम् ।

सुप्रतिष्ठिते खलु जैनशासने दुश्चरेषु साधूनामाचारेषु करालकालवैषम्यविलसितेन शैथिल्य प्रोज्जृम्भे, यतोऽत्रैव खलु गूर्जरत्राया राजधान्यामणहिल्पाटके चैत्यवासियतीनां प्राबल्य प्रास्फुरत् । अस्मिंश्च समये चान्द्रकुलीनवर्धमानसूरिशिष्यो जिनेश्वरसूरिरविरुदगात् । येनाणहिल्पाटकपत्तने चौलुक्यदुर्लभराजराजपर्षदि वादे चैत्यवासिनो विजित्य यतिना चैत्यवासो न्यषेधि, वसतिवासश्च प्रचकाशे ( विलोकनीय परि० २, पृ ९५–९६, परि० ३, पृ १०८, भूमिका पृ १०, जे भा सूची पृ २ ) गणधरसार्धशतकवृत्त्यादेश्च यच्चरितमुपलभ्यते ।

वि स १०५५वर्षे उपदेशपदटीकाकर्तुर्वर्धमानसूरे शिष्योऽय स एव जिनेश्वरसूरिरभिज्ञेयो येन वि स १०८० वर्षे जावालिपुरे हारिभद्रीयाष्टकाना सुप्रसिद्धा वृत्ति, प्रसिद्ध प्रमालक्ष्म पञ्चलिङ्गी षट्स्थानकप्रकरणादि च प्राणायि । यत्कृतेर्लीलावतीकथाया कथाकोषस्य च सूचनमस्माभिरकार्यन्यत्र (जे भां सूची, अप्रसिद्ध० ९०,९६ ) यद्बन्धुर्बुद्धिसागरसूरि वि स १०८०वर्षे जावालिपुरे पञ्चग्रन्थीशब्दलक्ष्मप्रभृति प्रणिनाय । यच्छिष्यो धनेश्वरसाधुर्जिनभद्रसूरि वि स १०९५ वर्षे चड्डावलि( चन्द्रावती )पुर्या सुरसुन्दरी कथां जुगुम्फ, जिनचन्द्रसूरि वि स ११२५ वर्षे सवेगरङ्गशाला व्यरचयत्, सुप्रसिद्धोऽभयदेवसूरिश्च वि स ११२०–८ वर्षेषु पत्तनादौ नवाङ्ग–पञ्चाशकादिवृत्तीर्व्यधत्त स्तम्भने पार्श्वप्रतिमां च प्रत्यष्ठापयत् [ अत्र भूमिका परिशिष्ट जे भा सूची च वीक्षणीया ]

विक्रमीयैकादशशताब्द्या जिनेश्वरसूरिणैव प्रस्फुट चैत्यवासादिशैथिल्ये प्रतिहते प्रभूतैर्वसतिवासे स्वीकृतेऽपि कैश्चिन्निजकदाग्रहो नैवात्यजि, तन्मूलोऽविविश्य जिनगृहादौ नैव विररामेति विक्रमीयद्वादशशताब्द्या चैत्यवासिनामेकतमोऽपि चैत्यवासिदीक्षितोऽपि वसतिवासिनवाङ्गीवृत्तिकाराभयदेवसूरिशिक्षितो जिनवल्लभसूरिस्तन्निवारणाय प्रायतत ।

अत्र भूमिकाया चर्चर्यादौ गणधरसार्धशतके [ परि० २ ] सुगुरुपारतन्त्र्ये [ परि० ३ ] च यो विस्तरेण परिचय प्रापितस्तेन जिनवल्लभसूरिणा प्राक् चित्रकूटे विधिपथ प्रचकाशे, यदाय सामान्यस्वरूपमेतदीयकृते सङ्घपट्टकात् [ परि० १ ] समनवुध्यते । तस्यैव विधिपथस्य विशेषस्वरूपविज्ञानाय तत्कालप्रसृतप्रतिक्षिप्ताविधिविज्ञानायापि च प्रभवति खलु प्रस्तुता काव्यत्रयी, या तदीयपट्टधरेण जिनदत्तसूरिणा प्रणीता, तत्प्रशिष्याभ्यां जिनपाल–सूरप्रभोपाध्यायाभ्यां च व्याख्याता ।

पुणु गोहुमसालेहिँ मुग्गह दालिहिँ पिट्ठेहिँ सज्जिय रसघडिय ।
कालायरवद्धा हिंगु सुयक तलिय तिविह पप्पड पडिय ॥ ३४ ॥
खड आसुरिय आसुरिय गुलमिट्ठयं बहुपलेहेहिँ तह भुजिय पेट्ठयं ।
तलिय सयलेह चणऊरवाइगण कासमदेण ससिद्धय रिंगण ।
तिंडिस कच्चर अव अवोइया दिन्न तुडीरिया खड सजोइया ।
चमलया चुचु चणसाइ चमलाइया वत्थुलो लोणओ सरिसवी राइया ।
गोहुमा चणय वल्ला य तह सगरो बहुपयारेहिँ निम्मविउ पाचुगरो ।
वडिय पदविडिया वेरवडि निंविया हरडइ दाडिमी अवरसरद्धिया ।
कचणार करीराइ टक्कारिया फोग्ग सोहजणो दिन्न वग्घारिया ।
तलिय पडउल कक्कोड कारेल्लया चग कालिंग कक्कडिय दिन्नेल्लिया ।
" खीरवड घोलवड दुद्धवड दिन्नया पुणु पडति धवलत्थ भडया ।
घेउरा वि य(च)हुत्तरियखडया चाउजाय सुहपायमडिया सोयवट्टि फिणीओ मडिया ॥
सरस सेव सहिया सुहालिया सन्न चुइय कासार मीलिया ।
वर मुरुक्क वडिया मुरुक्किया कोकरीस लप्पासिय ढुक्किया ।
दुद्धवडय तह लड्डु लावणा सिंहकेसरा मोइया घणा ॥"
खडखज्जु अट्ठारस इम त कमेण परिविट्ठु उत्तम ।
छासि हरणिरव घोलइ पाणइ वहुलइ भुत्तुत्तरे अइमिट्ठउ ।
सहु सुट्ठिहिँ मिरिएहिँ खडेहिँ तरिएहिँ कढिउ दुद्धु परिविट्ठउ ॥
" सो तारिस होसइ कवण देवि वाहाडइ किं न पाएहिँ पडेवि ।
रुसतइ सरिस कवणु माणु माणहवि वहिणि ! भल्लउ* पमाणु ॥"
" को ससारि सया सुहिउ ? कस्स व सयल मणोरह पूरिय ? ।
कस्स न उपज्जइ खलिउ ? कस्स न आसा–महादुम चूरिय ? ॥
तेणं तित्थु सेत्तुञ्जु पसिद्धउ अंतकालि कयउण्णेहिँ लद्धउ ।
विमलगिरिहि जो अणसणु पावइ सो ससारि न पुणु पुणु आवइ ॥"
—निजामनतीकथायाम् [ जे भां सा २,१४७,८,२०२,२०१ ]

१ स तादृशो भविष्यति कः देवो विधापयति किं न पादयोः पतित्वा ।
रुष्यता सदृशं कीदृग् मानं मानयति भगिनि ! भद्र प्रमाणम् ॥
२ कः संसारे सदा सुखितः ? कस्य वा सकला मनोरथाः पूर्णाः ?
कस्य नोत्पद्यते स्खलितं ? कस्य न आशा–महाद्रुमश्चूर्णितः ? ॥
३ तेन तीर्थं शत्रुञ्जयं प्रसिद्धम् अन्तकाले कृतपुण्यैर्लब्धम् ।
विमलगिरौ योऽनशनं प्राप्नोति स संसारे न पुनः पुनरागच्छति ॥

## काव्यत्रयी-परामर्शः।

प्रस्तुताया काव्यत्रय्या कर्तृविषये कविगुरुविषये व्याख्यातृविषयेऽपभ्रंशभाषाविषये च वक्तव्यमुपरि प्रादर्शि। अथ तस्या रचनाऽऽदिविषयेऽपि किञ्चिद् वक्तव्यमुचितम्।

सुप्रतिष्ठिते खलु जैनशासने दुश्चरेषु साधूनामाचारेषु करालकालवैषम्यविलसितेन शैथिल्यं प्रोज्जृम्भे, यतोऽत्रैव खलु गूर्जरत्राया राजधान्यामणहिल्लपाटके चैत्यवासियतिनां प्राबल्यं प्रास्फुरत्। अस्मिंश्च समये चान्द्रकुलानवर्धमानसूरिशिष्यो जिनेश्वरसूरिरविरुदगात्। येनाणहिल्लपाटकपत्तने चौलुक्यदुर्लभराजराजपर्षदि वादे चैत्यवासिनो विजित्य यतिनां चैत्यवासो न्यपेधि, वसतिवासश्च प्रचकाशे (विलोकनीय परि० २, पृ ९५-९६, परि० ३, पृ १०८, भूमिका पृ १०, जे भा सूची पृ २) गणधरसार्धशतकवृत्त्यादेश्च यच्चरितमुपलभ्यते।

वि स १०९५वर्षे उपदेशपदटीकाकर्तुर्वर्धमानसूरे शिष्योऽय स एव जिनेश्वरसूरिरभिज्ञेयो येन वि स १०८० वर्षे जावालिपुरे हारिभद्रीयाष्टकाना सुप्रसिद्धा वृत्ति, प्रसिद्ध प्रमालक्ष्म पञ्चलिङ्गी षट्स्थानकप्रकरणादि च प्राणायि। यत्कृतेर्लीलावतीकथाया कथाकोषस्य च सूचनमस्माभिरकार्यन्यत्र (जे भा सूची, अप्रसिद्ध० ५०, ५६) यद्वन्धुर्बुद्धिसागरसूरि वि स १०८०वर्षे जावालिपुरे पञ्चग्रन्थीशब्दलक्ष्मप्रभृति प्रणिनाय। यच्छिष्यो धनेश्वरसाधुर्जिनभद्रसूरि वि स १०९५ वर्षे चड्डावलि(चन्द्रावती)पुर्यां सुरसुन्दरीकथा जुगुम्फ, जिनचन्द्रसूरि वि स ११२५ वर्षे संवेगरङ्गशाला व्यरचयत्, सुप्रसिद्धोऽभयदेवसूरिश्च वि स ११२०-८ वर्षेषु पत्तनादौ नवाङ्ग-पञ्चाशकादिवृत्तीर्व्यधत्त स्तम्भने पार्श्वप्रतिमां च प्रत्यष्ठापयत् [अत्र भूमिका परिशिष्ट जे भा सूची च वीक्षणीया]

विक्रमायैकादशशताब्द्यां जिनेश्वरसूरिणैव प्रस्फुट चैत्यवासादिशैथिल्ये प्रतिहते प्रभूतैर्वसतिवासे स्वीकृतेऽपि कैश्चिन्निजकदाग्रहो नैवात्यजि, तन्मूलोऽविधिश्च जिनगृहादौ नैव विररामेति विक्रमीयद्वादशशताब्द्या चैत्यवासिनामेकतमोऽपि चैत्यवासिदीक्षितोऽपि वसतिवासिनवाङ्गीवृत्तिकाराभयदेवसूरिशिक्षितो जिनवल्लभसूरिस्तन्निवारणाय प्रायतत।

अत्र भूमिकाया चर्चर्यादौ गणधरसार्धशतके [परि० २] सुगुरुपारतन्त्र्ये [परि० ३] च यो विस्तरेण परिचय प्रापितस्तेन जिनवल्लभसूरिणा प्राक् चित्रकूटे विधिपथ प्रचकाशे, यदीय सामान्यस्वरूपमेतदायकृते सङ्घपट्टकात् [परि० १] समनुश्रूयते। तस्यैव विधिपथस्य विशेषस्वरूपनिवेदनाय तत्कालप्रसृतप्रतिक्षिप्ताविधिविज्ञापनायापि च प्रभवति खलु प्रस्तुता काव्यत्रयी, या तदीयपट्टधरेण जिनदत्तसूरिणा प्रणीता, तत्प्रशिष्याभ्यां जिनपाल-सूरप्रभोपाध्यायाभ्यां च व्याख्याता।

## चर्चरी ।

प्राकृतापभ्रंशादिभाषाया 'चचरी' 'चाचरि' इति नाम्ना संस्कृतभाषाया च 'चर्चरी' इति संज्ञया प्रसिद्धाया गीतेर्नृत्यपूर्वं गान–क्रीडन–गुम्फनादिपद्धति प्राचीना परिज्ञायते यतः कविकालिदासो विक्रमोर्वशीयाश्चतुर्थेऽङ्के प्रभूतानि चर्चरी पद्यान्यपभ्रंशभाषायां व्यरचयत् । हरिभद्रसूरि समरादित्यकथाऽऽदौ, दाक्षिण्यचिह्नोद्योतनाचार्य कुवलयमालाकथाऽऽदौ, शीलाङ्काचार्यश्चतुष्पञ्चाशन्महापुरुषचरिते, कवि श्रीहर्षो रत्नावलीनाटिकाया प्रारम्भेऽन्ये चान्यत्र स्मरति स्म चर्चरीम् । पिङ्गलनाग–हेमचन्द्रादय प्रतिपादयन्ति स्म चर्चरीलक्षणानि निजे च्छन्द शास्त्र–च्छन्दोऽनुशासनादौ ।

प्रसिद्धयत खलु कविसोल्णकृता चर्चरी इत एव प्रकाशिते प्राचीनगूर्जर काव्यसङ्ग्रहे । उपलभ्यते चान्या पत्तनीयजैनभाण्डागारादौ वेलाउलीरागेण गीयमाना शत्रुञ्जयमण्डनादिजिनस्तुतिरूपा पञ्चत्रिंशद्गाथाप्रमाणा प्रायो विक्रमीयचतुर्दशशताब्दीसम्भवा, इतरा च गूर्जरीरागेण गीयमाना गुरुस्तुतिरूपा संक्षिप्ता पञ्चदशगाथा परिमिता ।

यमकालङ्काराद्यलङ्कृता प्रस्तुता चर्चरी तु सप्तचत्वारिंशत्पद्यप्रमिता जिनवल्लभसूरिस्तुतिरूपा चैत्यविधिप्रधाना संस्कृतवृत्तिसमन्विता वृत्तिकृत्सूचनानुसारेण पढ(ट)मञ्जरीभाषया नृत्यद्भिर्गीयमाना च ज्ञायते । पटमञ्जरीरागोऽसूचि खलु नारदकृते इत एव प्रकाशिते सङ्गीतमकरन्दादौ । दृश्यन्ते प्रभूतानि पटमञ्जरीपद्यानि विक्रमीयसप्तमशताब्दीसम्भूतैर्लुइपादप्रभृतिभिर्विरचितेषु चर्याचर्यविनिश्चयादिषु श्रीयुतमहामहोपाध्यायहरप्रसादशास्त्रिमहाशयै सम्पादिते वङ्गीयसाहित्यपरिषदा प्रकाशिते 'बौद्ध गान ओ दोहा' सञ्ज्ञके पुस्तके । वि सं १३९८ वर्षे पढमञ्जरीभाषया रचित गौतमचरितकुलकमुपलभ्यते पत्तनायजैनभाण्डागारे । अनेन पट(ढ)मञ्जरीरागस्य चिरात् प्रतिष्ठाऽनुमीयते ।

---

१ 'जदा वण कवलिणा भरण पएसिऊण पंच चोरसयाइ रासगभयगच्छलेण महामोहगहगहिआइ अभिणविऊण इमाए चच्चरीए संबोहियाइ । अवि य—

सबुज्झह किंण बुज्झह पत्तिहुए वि मा किंचि मुज्झह ।
धीरउ ज करिय(?)य पुण दुण्इ त परिभ्रमय ॥ ति धुवय ।
[illegible] तउ [illegible] तउ ।
[illegible] रासयम्मि [illegible] ॥
[illegible] किंण बुज्झह० पुण धुवय ।'

—कुवलयमालाकथायाम् [ [illegible] ]

प्रस्तुतायाश्चर्चर्या रचनास्थल वाग्जड( वागड )देशे व्याघ्रपुरमिति वृत्तिकारेण वृत्तिप्रारम्भे, सुमतिगणिना च गणधरसार्धशतकवृत्तौ ( भूमिका पृ ९० )समसूचि। रचनासमयश्च विक्रमीयद्वादशशताब्द्या उत्तरार्धरूप । वृत्तिकारसतीर्थ्येन सुमतिगणिना वि स १२९५ वर्षे विनिर्मिताया गणधरसार्धशतकवृत्तौ ( लि प ३५६, ३८१ ) अस्याश्चर्चर्या १६, १८, २१–२५ तमानि पद्यानि समुद्धृतानि । अस्या प्रारम्भ पद्यव्याख्याया व्याख्याकारेण कुन्दनामक च्छन्द पर्यवबोधि ।

## उपदेशरसायनम् ।

सुगुरु–कुगुरु–सुपथ–कुपथविवेचक लोकप्रवाह–चैत्यविधिनिरोधक विधि-चैत्य–विधिधर्मस्वरूपावबोधक श्रावक–श्राविकाऽऽदिशिक्षाप्रद धर्मोपदेशपर चैतदपि द्वादशशताब्द्या उत्तरार्धे प्रणीत सम्भाव्यते । प्राकृतापभ्रंशप्रायेष्वेतादृग्ग्रन्थेषु वृत्ति विरचनपद्धतिर्नास्तीति सूचयन्नस्य सस्कृतवृत्तिकार —

" चर्चरी–रासकप्रख्ये प्रबन्धे **प्राकृते** किल ।
वृत्तिप्रवृत्ति नाधत्ते प्राय कोऽपि विचक्षण ॥
**प्राकृतभाषया** धर्मरसायनाख्यो रासकश्चक्रे । "

इत्यादिनोल्लेखेनात्र दर्शितस्यापभ्रंशलक्षणसिद्धस्यापि ग्रन्थत्रयस्य प्राकृतभाषामयत्वमसूचयत्, अपभ्रंशभाषाया प्राकृतात्मकत्वात् सामान्यापेक्षया तथोक्तावपि न काऽपि क्षति । अपभ्रंशभाषालक्षणलक्षिताना ग्रन्थाना प्राकृतत्वेन प्रसिद्धि प्राचीना ।

अशीतिवृत्तात्मक पादान्तयमक मनोहरमेतद् रासससञ्ज्ञित काव्य षोडशमात्राऽऽत्मकपादपरिकलित पद्धटिकाबन्धबद्ध गीतिकोविदै सर्वेषु रागेषु गीयत इति वृत्तिप्रारम्भेऽत्र प्रत्यपादि । प्राकृतपिङ्गल–गाथालक्षण–स्वयम्भूच्छन्द –च्छन्दोऽनुशासनप्रभृतिषु च्छन्दोलक्षणग्रन्थेषूपलभ्यते पद्धटिका(पज्झडिया)च्छन्दोलक्षणस्मरणम् । आपलीसङ्घीय-स्वयम्भूकविना पद्धटिका( पद्धडी )बन्ध रामायणमपभ्रंशभाषाया विरचितमासीदिति श्रूयते अमरकीर्तिमहाकवि वि स १२७४ वर्षे विनिर्मिते षट्कर्मोपदेश( छकम्मुवएस )-सञ्ज्ञकेऽपभ्रंशग्रन्थे सूचयामास निजा कृति यशोधरचरितसञ्ज्ञा पद्धटिकाबन्धपरिकलिता-मित्यादिना परिज्ञायते पद्धटिकापद्ये पुरातनाना समादर ।

प्रस्तुतस्य रसायनस्य ४, ६, २७, २९, ३३, ३४, ६९, ७१ प्रभृतीनि पद्यानि वि स १२९५ वर्षे विनिर्मिताया गणधरसार्धशतकबृहद्वृत्तौ ( प ३–६७––३७० ) वृत्तिकारसतीर्थ्येन सुमतिगणिनोपात्तानि प्रेक्ष्यन्ते ।

## कालस्वरूपकुलकम् ।

यमकालङ्कारायलङ्कृत द्वात्रिंशन्मित पूर्वोक्तपद्धटिकापद्यैरेव गुम्फितमुपदेशपरम प्येतत् सस्कृतवृत्तिकाराभिप्रायेण 'कालस्वरूपकुलक' सञ्ज्ञयाऽत्र प्राकाशि । अस्य प्रारम्भे

# चर्चरी ।

प्राकृतापभ्रंशादिभाषाया 'चच्चरी' 'चाचरि' इति नाम्ना संस्कृतभाषाया च 'चर्चरी' इति संज्ञया प्रसिद्धाया गातेर्नृत्यपूर्वं गान–क्रीडन–गुम्फनादिपद्धति प्राचीना परिज्ञायते यतः कविकालिदासो विक्रमोर्वशीयाश्चतुर्थेऽङ्के प्रभूतानि चर्चरी पद्यान्यपभ्रंशभाषाया व्यरचयत् । हरिभद्रसूरि समरादित्यकथाऽऽदौ, दाक्षिण्यचिह्नोद्योतनाचार्य कुवलयमालाकथाऽऽदौ, शीलाङ्काचार्यश्चतुष्पञ्चाशन्महापुरुषचरिते, कवि श्रीहर्षो रत्नावलीनाटिकाया प्रारम्भेऽन्ये चान्यत्र स्मरति स्म चर्चरीम् । पिङ्गलनाग–हेमचन्द्रादय प्रतिपादयन्ति स्म चर्चरीलक्षणानि निजे च्छन्दः शास्त्र–च्छन्दोऽनुशासनादौ ।

प्रसिद्धयत खलु कविसोलणकृता चर्चरी इत एव प्रकाशिते प्राचीनगूर्जर काव्यसङ्ग्रहे । उपलभ्यते चान्या पत्तनीयजैनभाण्डागारादौ वेलाउलीरागेण गीयमाना शत्रुञ्जयमण्डनादिजिनस्तुतिरूपा पञ्चत्रिंशद्गाथाप्रमाणा प्रायो विक्रमीयचतुर्दशशताब्दीसम्भवा, इतरा च गूर्जरीरागेण गीयमाना गुरुस्तुतिरूपा संक्षिप्ता पञ्चदशगाथा परिमिता ।

यमकालङ्काराद्यलङ्कृता प्रस्तुता चर्चरी तु सप्तचत्वारिंशत्पद्यप्रमिता जिनवल्लभसूरिस्तुतिरूपा चैत्यविधिप्रधाना संस्कृतवृत्तिसमन्विता वृत्तिकृत्सूचनानुसारेण पढ(ट)मञ्जरीभाषया नृत्यद्भिर्गीयमाना च ज्ञायते । पटमञ्जरीरागोऽसूचि खलु नारदकृते इत एव प्रकाशिते सङ्गीतमकरन्दादौ । दृश्यन्ते प्रभूतानि पटमञ्जरीपद्यानि विक्रमीयसप्तमशताब्दीसम्भूतैर्लूइपादप्रभृतिभिर्विरचितेषु चर्याचर्यविनिश्चयादिषु श्रीयुतमहामहोपाध्यायहरप्रसादशास्त्रिमहाशये सम्पादिते बङ्गीयसाहित्यपरिषदा प्रकाशिते 'बौद्ध गान ओ दोहा' सञ्ज्ञके पुस्तके । वि स १३९८ वर्षे पढमञ्जरीभाषया रचित गौतमचरितकुलक मुपलभ्यते पत्तनीयजैनभाण्डागारे । अनेन पट(ढ)मञ्जरीरागस्य चिरात् प्रतिष्ठाऽनुमीयते ।

---

१ 'जहा तेण कवलिणा भरण पएवि ऊण पंच चोरसयाइं रासणच्चगच्छलेण महामोहग-हणदिआइं अभिनविऊण इमाए चच्चरीए सयोदियाइं । अवि य—

सव्वुज्झह किण्ण बुज्झह पत्तिलए वि मा किंचि मुज्झह ।
धीरउ न करिय वय पुण दुक्खाइं त परिअन्नय ॥ ति धुवय ।
[illegible]
[illegible]
भपुज्झह किण्ण बुज्झह पुण धुवय ।'

—कुवलयमालाकथायाम् [जै ग्रं मा १]

**सम्पद्विजय**मुनिराजस्य कृपया सम्प्राप्तानि। *कुवलयमालाकथाया।जिनदत्तसूरिस्तुतेश्च [ परि० ४ ] जेसलमेरुदुर्गभाण्डागारीय–ताडपत्रीयादर्शपुस्तक पञ्चशतवर्षप्राच्यताडपत्रीयपुस्तककाष्ठपट्टिकागत २९½" × ३¾" प्रमाणपरिमित ,परिचरपरिवृतस्य जिनवल्लभ–जिनदत्तसूरिद्वयस्य चित्रफलक च **जिनकृपाचन्द्रसूरेः** प्रसादेनात्रोपायोजीति ते धन्यवादार्हा । किञ्च भूमिकाया [ पृ ५६ ] सूचिताया वि स १३३४ वर्षे प्रतिष्ठिताया प्रस्तुतग्रन्थकारजिनदत्तसूरिमूर्तें प्रतिकृतिरपि निरचय्यात्र प्रागेवास्थापि ।

अत्राभिलषित कृतप्रायोऽपि चापभ्रंशशब्दाना कोष प्रसिद्धप्राकृतशब्दकोषेण प्रायो गतार्थत्वाद् भूमिकाऽऽदिदर्शनविलम्बमसहिष्णूना शीघ्रमेतद्दिदृक्षूणा विदुषा प्रेरणया चोपेक्षित । अत्र च कार्येऽत्रत्याध्यक्षै **डॉ विनयतोष भट्टाचार्य** एम् ए पी एच् डी महाशयैस्तथा श्रीयुत जी के **श्रीगोन्देकर** एम् ए इत्यनेन, के **रङ्गस्वामि**शास्त्रिणा च प्रासङ्गिक साहाय्य प्रदाय प्रोत्साहितोऽस्मीति ते प्रशसामर्हन्ति ।

सपादशतग्रन्थानामाधारभूतया भूमिकया सस्कृतच्छायया विषयसूच्या विशिष्टनामसूच्या च नि भूषिते परिशिष्टे पाठान्तरैर्मूर्ति चित्रप्रतिकृतिप्रभृतिभिश्च पर्यलङ्कृते सस्कृतवृत्तिसमन्विते ग्रन्थत्रयीगौरविते ऽस्मिन् ग्रन्थे मम मतिदौर्बल्येन प्रमादाद् दृष्टिदोषाद् वा काश्चित् स्खलना जाता सम्भवेयुस्ता परिशोधनीया सूचनीयाश्च कृतकृपैर्विद्वद्भिरिति प्रार्थयते—

ता २४–१२–२६ } गान्धीत्युपाह्वो भगवानदासतनय
**लालचन्द्र ।**

---

* कुवलयमालाकथाया सक्षिप्तपरिचयोऽस्माभि स १९७८ वर्षे जेसलमेरुदुर्गभाण्डागारीयग्रन्थसूच्यामप्रसिद्धग्रन्थ–ग्रन्थकृत्परिचये[ पृ ४२–४३ ]ऽकारि, तदैव च तदन्तर्गताष्टादशदेशीभाषाऽऽद्युल्लेखोऽत्रत्यजैनज्ञानमन्दिरीयाचिरलिखितपुस्तिकात समप्रादि, वि स १९८० वर्षे भावनगरे सप्तमगूर्जरसाहित्यपरिषदि च तदुपयुक्तलेखोऽपाठि । अस्मादवतारित कियानश मो द देशाई इत्यनेन ‘जैन गूर्जर कविओ’ सज्ञपुस्तके । स १९८१ वर्षे पण्डितबेचरदासन प्राकृतव्याकरणप्रवेशकार्थ पूर्वोक्तोऽस्मत्सद्ग्रहोऽयाचि । स १९८२ वर्षे मया जसलमेरुदुर्गस्य **जिनकृपाचन्द्रसूरिं** विज्ञप्य तत्रत्यभाण्डागारीयादर्शपुस्तकस्याभीष्टा पाठा समुद्धारिषत । अस्मिश्च स १९८३वर्षे मार्गशीर्षमासे प्रवर्तकश्री**कान्तिविजय**विनेयस्य कुवलयमालाकथासक्षेपादिसशोधकस्य मुनिराज**चतुरविजय**स्य प्रेरणया जेसलमेरुदुर्गभाण्डागार साक्षाद् द्रष्टु प्राभवम् । तत स्वय दृष्ट्वा तदादर्शपुस्तकम्, विलक्षणलिपेस्ततो भूरिपरिश्रमेणोद्धृतानुपयुक्तानशानत्र प्रसङ्गतो विदुषा भाषाविज्ञानवृद्धि–परितुष्टये प्रादर्शयम् । कुवलयमालाकथा–विलासवतीकथाप्रमुखताडपत्रीयपुस्तिकाना प्रतिकृतीश्चापि ( Photo-copies ) साम्प्रत समपादयम् ।

ग्रन्थकर्त्रा निजसत्ताकालस्य विक्रमीयद्वादशशतसवत्सरस्य विषम स्वरूपमपि किञ्चित पर्यदार्शि। ग्रन्थकर्तु स्वर्गवास स १२११ वर्षेऽजयमेरुदुर्गे समजनि [भूमिका पृ ९२] अत्र च व्यतीतस्य विक्रमीयद्वादशशतसवत्सरस्य स्वरूपसूचनमकारीति ग्रन्थकर्त्रा निजायुष प्रान्ते सप्ततितमवर्षप्राये वृद्धवयस्येतद् व्यधायीति निज्ञायते।

अस्य पञ्चविंशतितमे पद्ये ग्रन्थकर्त्रा 'वाहिल'नाम निरदेशि, वृत्तिकारेण तद्व्याख्याया समसूचि यथाऽणहिलपाटकपत्तनवास्तव्यस्य प्रस्तुतग्रन्थकृज्जिनदत्तसूरिसमुपासकस्य वाहिलस्य विज्ञप्त्या यशोदेवाभू—आसिग—सम्भवाना पृथग्धर्माश्रिताना तत्पुत्राणा प्रतिबोधार्थमेतत् कुलक प्रणाय प्रतिलेखरूपेण प्रेषितमासीत्। अनन्तर च तेऽपि विधिधर्माराधका अभूवन्। कुमारपालभूपालराज्यप्रारम्भे तस्य जैनधर्मस्वीकारात् प्रागेषा घटना विभाव्यते। उपर्युक्तायामेव गाथाया 'बहुतु खरउ' पद प्रयुज्य ग्रन्थकर्त्रा निजाभिमतस्य विधिपथस्य 'खरतर' इति गच्छसज्ञा ध्वनिता वितर्क्यते। विधिपथस्यैव तस्य कालक्रमेण प्रचलिता 'खरतरगच्छ' इत्यभिधाऽद्यावधि विद्यते।

अस्य कुलकस्य प्रारम्भे 'सुगुरुवएसु' प्रान्ते च 'जिणदत्तुवएसु' इति पदप्रयोगद्वारा ग्रन्थकर्त्राऽत्रोपदेशरूपाभिधेय ससूच्यास्य 'उपदेशकुलक' सज्ञाऽप्युपालक्षि।

### उपसहारः।

ग्रन्थत्रयीविलोकनेन तत्कर्तुर्जैनसिद्धान्त—व्याकरण—काव्य—च्छन्दोऽलङ्कार—ज्योति शास्त्रप्रभृतिषु प्रावीण्य परिज्ञायते। मूलग्रन्थकारस्य व्याख्यातॄणां गुरुशिष्यपारम्पर्यसम्बन्धेन समयसामीप्येन च व्याख्यासु क्वचित् क्वचिन्निबद्धा विशेषता विश्वासार्हा व्यज्यते। अस्या काव्यत्रय्या विषयसूची तु पृथगुपनिबद्धेति नात्र तद्विषये प्रयत्यते।

अस्या सम्पादनेऽत्रत्यसङ्ग्रहस्था पुस्तकत्रयी तथा चैका छाणीजैनज्ञानमन्दिरीया प्रतिरुपयुक्ताऽभवत्। क सज्ञिकायामष्टादशपत्रात्मिकायां नात्यर्वाचीनायां प्रतौ १–७+७+१९+१९–१८ तमेषु पत्रेषु क्रमेण सवृत्तेरपि काव्यत्रय्या समावेश। अन्या च नवपत्रात्मिका चर्चर्या प्रति 'ख' सज्ञिका। इतरा च दशपत्रात्मिका प्रतिरुपदेशरसायनस्य 'ख' सज्ञिता, 'ग' सज्ञिता चैकादशपत्रात्मिका छाणीजैनज्ञानमन्दिरीया नूतना प्रति। कालस्वरूपकुलकस्यात्रत्याया पत्रत्रयात्मिकाया पश्चादुपलब्धाया 'ख' सज्ञिताया प्रते पाठभेदस्तु प्रान्ते पृथग् दर्शित।

छाणीजैनज्ञानमन्दिरीया प्रति प्रवर्तकश्रीकान्तिविजयमुनिराजस्य कृपया प्राप्ता। तथा भूमिकाऽऽलेखने गणधरसार्धशतकबृहद्वृत्तेरुपदेशपदव्याख्यायाश्चोपयोगाय महापुरुषचरितप्रभृतेश्चादर्शपुस्तकानि मुनिश्रीहंसविजयशास्त्रसङ्ग्रहादभ्रपद्रजैनज्ञानमन्दिरत पन्यास

**सम्पद्विजय**मुनिराजस्य कृपया सम्प्राप्तानि। *कुवलयमालाकथाया जिनदत्तसूरिस्तुतेश्च [ परि० ४ ] जेसलमेरुदुर्गभाण्डागारीय-ताडपत्रीयादर्शपुस्तक पञ्चशतवर्षप्राच्यताडपत्रीयपुस्तककाष्ठपट्टिकागत २१½" × ३¾' प्रमाणपरिमित ,परिचरपरिवृतस्य जिनवल्लभ-जिनदत्तसूरिद्वयस्य चित्रफलक च **जिनकृपाचन्द्रसूरेः** प्रसादेनात्रोपायोजीति ते धन्यवादार्हा । किञ्च भूमिकाया [ पृ ९६ ] सूचिताया वि स १३३४ वर्षे प्रतिष्ठिताया प्रस्तुतग्रन्थकारजिनदत्तसूरिमूर्ते प्रतिकृतिरपि विरचय्यात्र प्रागेवास्थापि ।

अत्राभिलषित कृतप्रायोऽपि चापभ्रंशशब्दाना कोष प्रसिद्धप्राकृतशब्दकोषेण प्रायो गतार्थत्वाद् भूमिकाऽऽदिदर्शनविलम्बमसहिष्णूना शीघ्रमेतद्दिदृक्षूणां विदुषां प्रेरणया चोपेक्षित । अत्र च कार्येऽत्रत्याध्यक्षै **डॉ विनयतोष भट्टाचार्य** एम् ए पी एच् डी महाशयैस्तथा श्रीयुत जी के **श्रीगोन्देकर** एम् ए इत्यनेन, के **रङ्गस्वामिशा**स्त्रिणा च प्रासङ्गिक साहाय्य प्रदाय प्रोत्साहितोऽस्मीति ते प्रशसामर्हन्ति ।

सपादशतग्रन्थानामाधारभूतया भूमिकया सस्कृतच्छायया विषयसूच्या विशिष्टनामसूच्या च वि भूषिते परिशिष्टै पाठान्तरैर्मूर्ति चित्रप्रतिकृतिप्रभृतिभिश्च पर्यलङ्कृते सस्कृतवृत्तिसमन्विते ग्रन्थत्रयीगौरवितेऽस्मिन् ग्रथे मम मतिदौर्बल्येन प्रमादाद् दृष्टिदोषाद् वा काश्चित् स्खलना जाता सम्भवेयुस्ता परिशोधनीया सूचनीयाश्च कृतकृपैर्विद्वद्भिरिति प्रार्थयते—

ता २४-१२-२६ } गान्धीत्युपाह्वो भगवानूदासतनय

**लालचन्द्र ।**

---

* कुवलयमालाकथाया सक्षिप्तपरिचयोऽस्माभि स १९७८ वर्षे जेसलमेरुदुर्गभाण्डागारीयग्रन्थसूच्यामप्रसिद्धग्रन्थ-ग्रन्थकृत्परिचये[ पृ ४२-४३ ]ऽकारि, तदैव च तदन्तर्गतापभ्रंशाष्टादशदेशीभाषाऽऽद्युल्लेखोऽत्रत्यजैनज्ञानमन्दिरीयाचिरलिखितपुस्तिकात समप्राहि, वि स १९८० वर्षे भावनगरे सप्तमगूर्जरसाहित्यपरिषदि च तदुपयुक्तलेखोऽपाठि। अस्मादवतारित कियानश मो द देशाइ इत्यनेन 'जैन गूर्जर कविओ' सज्ञकपुस्तके। स १९८१ वर्षे पण्डितबेचरदासेन प्राकृतव्याकरणप्रवेशकाय पूर्वाक्तोऽस्मत्सङ्ग्रहोऽयाचि। स १९८२ वर्षे मया जेसलमेरुदुर्गस्थ **जिनकृपाचन्द्रसूरिं** विज्ञप्य तत्रत्यभाण्डागारीयादर्शपुस्तकस्याभीष्टा पाठाः समुद्तारिषत। अस्मिश्च स १९८३वर्षे मार्गशीर्षमासे प्रवर्तकश्री**कान्तिविजय**विनयस्य कुवलयमालाकथासक्षेपादिसशोधकस्य मुनिराज**चतुरविजय**स्य प्रेरणया जेसलमेरुदुर्गभाण्डागार साक्षाद् द्रष्टु प्राभवम्। तत स्वय दृष्ट्वा तदादर्शपुस्तकम्, विलक्षणलिपेस्ततो भूरिपरिश्रमेणोद्धृतानुपयुक्तानशानत्र प्रमाक्नो विदुषा भाषाविज्ञानवृद्धि-परितुष्टये प्रादर्शयम् । कुवलयमालाकथा-विलासवतीकथाप्रभृतस्ताडपत्रीयपुस्तिकानां प्रतिकृतीश्चापि ( Photo-copies ) साम्प्रतं समपादयम्।

# काव्यत्रयी-विषयप्रदर्शनम् ।

## चर्चर्याम् ।

१ धर्मजिनस्तुतिर्मङ्गलम्, जिनवल्लभसूरिस्तुतिरूपाभिधेयसूचनम् ।

जिनवल्लभसूरेर्विद्यावैशारद्यम् २-८

२ जिनवल्लभसूरे षड्दर्शन-प्रमाणज्ञानम् ।

३ „ व्याकरण-च्छन्द शास्त्रज्ञानम् ।

४ „ काव्यरचनाचातुरी, माघकवितोऽप्याधिक्यम् ।

५ „ कविकालिदासाद् विशेषता ।

६ „ वाक्पतिराजाद् वैशिष्ट्यम् ।

७ „ चित्रकाव्यानि स्तुति-स्तोत्राणि ।

८ „ जिनसिद्धान्तविज्ञानम्, विधि-निषय-पारतन्त्र्यप्रकटनम् ।

जिनवल्लभसूरिप्रवृत्ति । विधिपथप्रकटनम् ९-१४

९ „ जिनभाषितसूत्रानुसारिकथन-क्रिये । तद्दर्शन विना गुणिनां खेद ।

१० जिनवल्लभसूरिणा लोकप्रवाह परिहृत्य, कुमार्गशत निराकृत्य पारतन्त्र्येण सह कारित निविविषयप्रवर्तनम्, दु सङ्घ-सुसङ्घयोरन्तरदर्शनम, वर्धमानजिन-तीर्थस्य नैरन्तर्यम् ।

११ „ उत्सूत्रभाषिणां दूरत परिहरणम्, सुज्ञान-दर्शन-क्रियाणामाचरणम् । गड्डरिकाप्रवाहप्रवृत्तिं संवृत्य गीतार्थाचार्यस्मारणम् ।

१२-१३ „ लोकप्रवाहप्रवृत्ते कुतूहलप्रियै क्रियमाणानां चैत्यगृहेऽनुचितानां निरङ्कनिवारितानामाशातनारूपाणां गीत-वादित्र-प्रेक्षण-स्तुति-स्तोत्राणां क्रीडा-कौतुकानां च निषेधनम् ।

१४ „ युगप्रवरागमहरिभद्रसूरिसम्मतविधिपथस्य प्रकटनम् ।

१५ „ विधिचैत्यगृहस्य आयतनमनिश्राचैत्यमिति सञ्ज्ञासूचनम् ।

जिनवल्लभसूरिप्रदर्शितविधिचैत्यगृहस्य विधि १६-२७

१६ विधिचैत्यगृहे उत्सूत्रजनक्रमरोध , निशि स्नान प्रतिष्ठानिषेध , निशि साधु-साध्वी-युवतीनां प्रवेशनिषेध , विलासिनीनृत्यनिषेध ।

१७ „ जाति-ज्ञाति-कदाग्रहनिषेध , निन्दितकर्मनिषेध , धर्मिजनपीडानिषेध । शुद्धधर्मवासितहृदयस्याधिकारित्वम् ।

## उपदेशरसायने ।

१८ विधिचैत्यगृहे त्रिचतुरसुश्रावकदृष्टो द्रव्यव्यय। निशि नन्दिपूर्वकव्रतनिषेध । सूर्यास्तमने बलिनिषेध । सुप्ते जने तूर्यरवनिषेध ।

१९ ,, रजन्यां रथभ्रमण लकुटरासानिवारणम्। देवताना जलक्रीडाऽऽन्दोलननिषेध । कृताष्टाह्निकानां माघमालाया अनिषेध ।

२० ,, जिनप्रतिमानां प्रतिष्ठाकरणे श्रावकाणामनधिकार । यथाच्छन्द प्रवृत्तिनिषेध । उत्सूत्रप्रवृत्ताना वचनमश्राव्यम् । जिन-गुर्वोरयुक्तगेयगाननिषेध ।

२१ ,, श्रावकाणा ताम्बूल भक्षण ग्रहणयोर्निषेध, उपानद्धारणनिषेध, भोजन शयनानुचितोपवेशननिषेध, प्रहरण-दुष्टजल्पनवारणम्।

२२ ,, हास्य-होडा-क्रीडा-रोपण-कीर्तिदाननिषेध, आशातनाकारिमेलननिषेध ।

२३ ,, सङ्क्रान्ति-ग्रहण-माघमण्डलनिषेध, शिरोवेष्टनकानिषेध, स्नपनकारेतरविभूषानिषेध । गृहचिन्तानिषेध ।

२४ ,, मलिनवस्त्र देहाभ्यां जिनवरपूजानिषेध । शुचिभूताया अपि श्राविकाया मूलप्रतिमास्पर्शनिषेध । उत्तारितस्यारात्रिकस्य पुनरुत्तारणे निषेध ।

२५ ,, निर्माल्यम् । यतिममत्व वासनिषेध । नीतिप्रचार ।

२६ ,, सत्यजल्पनम् । समय-युक्त्या घटमानमेकोक्तमपि कर्तव्यम् ।

२७ ,, आत्मप्रशसा-परदूषणयो परिहार ।

२८ ,, उत्सूत्राणि निषिध्य प्रशस्तिषु लेखयितुर्युगप्रधानजिनवल्लभस्य महनीयता ।

२९ उत्सूत्रभाषणस्य विपाक ।

३० लोकप्रवाहप्रवृत्तानां नामसुविहितानां चेष्टा ।

३१ अनुस्रोत -प्रतिस्रोत प्रवृत्तानां परिणाम ।

३२ आगमाचरणसवादिनां पूज्यता ।

३३ निश्राचैत्यवन्दने विचार

३४ लिङ्गिभिरधिष्ठिताशातितजिनमन्दिरस्य जिनद्रव्यकृतमठस्य च साधर्मिकस्थलीति सञ्ज्ञा । तद्वन्दनाद्य वैफल्यम् ।

३५-३६ अनायतनगमनस्यानायतनवासिनां नमनस्य चायुक्तता ।

३७ जनरञ्जनार्थं दुष्करक्रियाकारिणां यमतिवर्गाणामुत्सूत्रजल्पकानां दर्शननिषेध ।

३८ विधिचैत्य-निश्राकृतचैत्यानायतनेषु गमनविचार ।

## कालस्वरूपकुलके ।

१९ कुपथपातितेन लोकप्रवाहपतितत्वात् सूत्रार्थाज्ञत्वात् तन्निवारक गीतार्थाना च मारणम्।

२० ,, शास्त्रेण विचारयतो धार्मिकजनस्य शस्त्रेण विदारणम् । तद्विधलोकपरिकरि तत्वात् गीतार्थैस्तत्परिहरणम् ।

२१–२२ कुपथपतितस्य गीतार्थाना च विरुद्धा चेष्टा ।

२३ कुपथपतितैर्विधिचैत्यग्रहणे तत्राविधिकरणे च प्रवर्तनम् ।

२४ नरपतिपक्षपातेनाविधिकारिभ्यो विधिचैत्येष्वर्पितेष्वपि प्रहरणधारिष्वपि तै सह धार्मिकानां विधिं विना कलहाभाव ।

विधिपथप्रपन्नाना प्रवृत्ति २५–३९

२५ सुगुरु–देवपदभक्ताना पञ्चपरमेष्ठिस्मारकानां धार्मिकानां प्रसन्नेभ्य शासनसुरेभ्यो भव्यकार्यसिद्धि ।

२६ धर्मकार्यं साधयतो युध्यमानस्य कथञ्चित् पर मारयतो न धर्मनाश, किञ्च परमपदे वास ।

२७ विधिधर्माधिकारिणा श्रावकाणामदीर्घससारिता, शुभगुरुवारणादविधिकरणत्याग । जिनसम्बन्धिन्या दारिकाया(वेश्याया) धारणनिषेध ।

२८ पुष्पेषु मूल्यलभ्येषु कूप–वाटिकादिकरणे स्थावरगृह–हट्टाना कारणे जिनधन सगृह्य तद्वृद्धौ चाप्रवृत्ति ।

२९ म्रियमाणस्य देयस्थाने भक्त्या ददतश्च गृह–हट्टानां ग्रहण तद्भाटकधनेन च जिनपूजनम् ।

३०–३१ धर्मकार्ये ददतां श्रावकाणां न निवारणम्, किन्तूत्साहन सर्व गृहव्यापारत्यागेन कषायैर्मोचनम् । चैत्राश्विनयोरष्टाह्निकाकारका सुरराजा भवेयुस्तथा शिष्टधर्मोपदेश ।

३२–३४ अष्टाह्निकाविधाने नर्तकीनृत्ये विवेक ।

३५ जिनचैत्ये गेय वाद्ये विवेक ।

३६ ,, स्तुति-स्तोत्रपाठे तालरासे लगुडरासे च विचार ।

३७ ,, नाटकनर्तने निष्क्रमणकथने च विधि ।

३८ ,, हास्य-क्रीडा-होडनिषेध । रात्रौ युवतिप्रवेशस्य स्नपन-नन्दी प्रतिष्ठाना च निषेध ।

३९ ,, मातमाठा–जलक्रीडाऽऽन्दोलननिषेध, सूर्येऽस्त गते घटिधारण-गृहकार्यनिषेध ।

४० ,, नन्दि–प्रतिष्ठाऽधिकारिसूरिस्थापन ।

### कालस्वरूपकुलके ।

१३ सुदुर्लभस्य कुल-बल जाति गुणसमृद्धस्य मनुजत्वस्य साफल्य उपदेश ।

१४ सुगुरूपदेश विनाऽऽर्यानार्यदेशयोर्नरत्वनैरर्थक्यम् ।

१५ दीर्घायुष्मतां गुरुवचनश्रवणयोग ।

१६ गुरुवचनश्रवणेऽपि जिनवचनश्रद्धानस्य दुर्लभता ।

श्रद्धानहीनाना विपरीताश्चेष्टा १७–२० ।

१७ अविधिप्रवर्तन–विधिपरदूषण–प्रवाहपतितप्रशसा, अनुस्रोत –प्रतिस्रोत सोर्नैर तर्यम् ।

१८ जिनवचनभ्रान्त्याऽन्यत्र धर्मे विलगनम्, सुगुरुश्रुतेर्दूरगमनम्, विधिपथ पृथक्स्थिताना जिन–मुनीनां व दनम्, त मार्गस्थितजनाभिन दनम् ।

१९ अनायतनव दनम् ।

२० पारत त्र्य–विधि–विषयाज्ञानम्, तज्ज्ञानिभि सह कलह, भस्मग्रहस्य दशमाश्चर्यस्य च प्रभाव ।

२१ दु षमा–हुण्डावसर्पिण्योर्दुष्टतावशादसयतपूजा ।

२२–२३ जघ यविंशतिप्रान्तसवत्सरेषु प्रजाक्षय., तत्र धर्मप्रमत्तानां धर्मप्रवृत्तानां च परिणामसूचनम् ।

२४ प्रमादत्यागिना विधिधर्मलग्नानां परमार्थवृत्त्या जीवज्जागरूकत्वम् ।

२५ चाहिलदर्शितेऽस्मिन् मार्गे प्रभूत विमर्श्य सदाऽऽदरकरणे सद्बोध ।

२६ ब धूनामैक्ये युतयुतब ध–दृढब धगृहयो पतनापतनदृष्टा-तेन बोध ।

२७ ऐक्ये प्रमार्जनीदृष्टा त ।

२८ श्लेपालङ्कारेण ग्रह–नक्षत्राणां दृष्टान्तेनौचित्योपेतस्य वसुप्राप्तिसूचन मातापित्रोश्चित्तावर्जकस्यैव च सर्वत्रादरसूचनम् ।

२९–३० लोहचुम्बकोपेत–तद्रहितपोतयोर्दृष्टा तेन लोभत्यागात् लाभदर्शनम् ।

३१ शुभगुरुदृष्टस्य दृष्यमादपि निर्मयत्वम्, परमेष्ठिमन्त्राधिवासितमनसो दु खनाश ।

३२ कर्तृनामनिर्देशपूर्वकमुपसहार । श्रोतृ-पाठकादीनां सिद्धिपदे यास ।

---



जे भा ता पुस्तिकाया काष्ठफलके चित्रिता जिनवल्लभसूरिमूर्तिः।



जे भा ता पुस्तिकाया काष्ठपट्टिकाया चित्रिता जिनदत्तसूरिमूर्ति ।

# अपभ्रंशकाव्यत्रयी ।

## (१)

## जिनदत्तसूरिविरचिता

### जिनपालोपाध्यायविहितवृत्तियुता

# चर्चरी ।

जिनपतिपदपद्म रम्यमानस्य शोण-
च्छविरचितदिगन्त कोमल श्रीनिधानम् ।
जडमतिरपि किञ्चिच्चर्चरीं चर्चयामि
प्रचुरगुरुगुणोद्यद्रत्नविद्योतमानाम् ॥१॥
स्तुतिस्वरूपा जिनवल्लभस्य प्रसङ्गतश्चैत्यविधिप्रधानाम् ।
गीतिप्रवृत्तोल्लसनैर्विदग्धामवेक्ष्य नैना भुवि मोदते क [1] ॥ २ ॥

इह हि समस्तविद्यानिधान–चारित्रपवित्र–निर्भीकशिरोमणि–श्रीमज्जिनवल्लभ-सूरिगुणात्यन्तावर्जितमानसा श्रीमज्जिनदत्तसूरय स्वय तदेकताना अपि शेपलोकस्य तदर्थतानिमित्त तद्गुणस्तुतिरूपा समस्तश्रोतृश्रोत्रपीयूपकल्पामिमा चर्चरीं चक्रु । इय च प्रथममञ्जरीभापया नृत्यद्भिर्गीयते । विरचिता च श्रीवाग्जडदेश-तिलकायमानश्रीमद्धर्मनाथजिनायतनविभूपिते श्रीव्याघ्रपुरे। ततस्तदासन्नतरतया आदौ तावत् श्रीधर्मनाथनमस्कारपूर्वक तामारिप्समाण इदमाह–

नमिवि जिणेसरधम्मह तिहुयणसामियह
पायकमलु ससिनिम्मलु सिवगयगामियह ।
करिमि जहट्ठियगुणथुइ सिरिजिणवल्लहह
जुगपवरागमसूरिहि गुणिगणदुल्लहह ॥ १ ॥

[ नत्वा जिनेश्वरधर्मस्य त्रिभुवनस्वामिन
पादकमल शशिनिर्मल शिवगतिगामिन ।
करोमि यथास्थितगुणस्तुतिं श्रीजिनवल्लभस्य
युगप्रवरागमसूरेर्गुणिगणदुर्लभस्य ॥ १ ॥ ]

---

१ क °तप्र° । २ ख ग °ष्प° । ३ घ प्रथम म° । ४ ख ग धीमद्° । ५ क °णि° ।

नत्वा जिनेश्वरस्य धर्मनाथस्य त्रिभुवनस्वामिन पादकमल शशिनिर्मल शिव गतिगामिन । करोमि यथास्थिता सत्या गुणस्तुतिं श्रीजिनवल्लभस्य युगप्रवराग मसूरेर्गुणिगणदुर्लभस्य । इद चैकविंशतिमात्राकलित वास्तुभेदेषु द्वितीय कुन्दनामक छन्द इत्यर्थ ॥ १ ॥

अथ सर्वविद्याप्राधान्येन तर्कविद्यायास्तद्विषया तावद् विरोधालङ्कारेण स्तुतिमाह--

जो अपमाणु पमाणेइ छद्दरिसण तणइ
जाणइ जिव नियनामु न तिण जिव कुवि घणइ ।
परपरिवाइगइंदवियारणपचमुहु
तसु गुणवन्नणु करण कु सक्कइ इक्कमुहु ? ॥ २ ॥

[ योऽप्रमाण प्रमाणानि षड्दर्शनाना
जानाति यथा निजनाम न तेन यथा कोऽपि घनानि ।
परपरिवादिगजेन्द्रविदारणपञ्चमुख
तस्य गुणवर्णनकरणे क शक्नोत्येकमुख ? ॥ २ ॥ ]

प्रमाण प्रत्यक्षादि, ततश्च योऽप्रमाणोऽपि सर्वथा प्रमाणरहितोऽपि । प्रमाणानि षड्दर्शनसत्कानि । षट् दर्शनानि चैवम्--

"बौद्ध नैयायिक साङ्ख्य जैन वैशेषिक तथा ।
जैमिनीय च नामानि दर्शनानाममून्यहो ! ॥
नैयायिकमतस्यान्ये भेद वैशेषिकै सह ।
न मन्यन्ते ततस्तेषा पञ्चैवास्तिकवादिन ॥
षड्दर्शनसङ्ख्या तु पूर्यते तन्मते किल ।
लोकायतमतक्षेपे कथ्यते तेन तन्मतम् ॥"

तेषा च प्रमाणान्येवम्--

"बौद्धोऽध्यक्षानुमाने वदति नयविदध्यक्ष-शाब्दानुमानौ
पञ्च मीमासकश्चानुमितिमुपमिताभाव शाब्द समक्षम् ।
अर्थापत्ति च षष्ठे जिनयुगिति परोक्षापरोक्षे समक्ष
चार्वाकोऽध्यक्ष शाब्दानुमिति निगदत साङ्ख्य-वैशेषिकौ च ॥"

"वैशेषिका हि पूर्वे केचित् त्रीणि प्रमाणान्याहुराधुनिकाश्च द्वे एवेति जाना तीति विरोधस्तत्परिहारश्चायम्-अपमानोऽपगतगर्व , अथवाऽप्रमाणोऽपरिमाणोऽ

---

६ ग ग धात्र । ७ क पा । ८ क °इमुभ° । ९ क °भा । १० ग, ग
°न्दु । ११ क. °वद° । १२ ग ग °नयद° । १३ [illegible] ग दनु । १४ [illegible] ग °हि° ।

परिच्छेद्यो गुणैरिति गम्यते। एतानि हि सदभ्यस्ततया निजनामवज्जानाति। न च तद्वदन्यो घनानि प्रभूतानि। परेऽन्ये प्रकृष्टा वा परिवादिनो जैनमतापभापणशीलास्त एव गजेन्द्रास्तेषा विदारण सर्वथा निराकरण तत्र पञ्चमुख सिंह। तस्य भगवतो गुणवर्णन कर्तुं क शक्नोत्येकमुख इत्यर्थ ॥ २ ॥

जो वायरणु वियाणइ सुहलक्खणनिलउ
सद्दु असद्दु वियारइ सुवियक्खणतिलँउ।
सुँच्छंदिण वक्खाणइ छदु जु सुजइमँउँ
गुरु लहु लहि पइठावइ नरहिउ विजयमँउँ ॥ ३ ॥

[ यो व्याकरण विजानाति शुभलक्षणनिलय
शब्दमशब्द विचारयति सुविचक्षणतिलक।
सुच्छन्दसा व्याख्यानयति छन्दो य सुयतिमत
गुरु लघु लब्ध्वा प्रतिष्ठापयति नरहितो विजयताम् ॥ ३ ॥ ]

यो व्याकरण शब्दलक्षणशास्त्र शास्त्रान्तरमहाकाव्यादिविधाननिबन्धन विजानाति। एतदन्तरेण हि शास्त्रान्तरानिष्पत्ते। तथा चोच्यते—

"अनधीत्य शब्दशास्त्र योऽन्यच्छास्त्र समीहते कर्तुम्।
सोऽहे पदानि गणयति निशि तमसि जले चिरगतस्य ॥"

शुभलक्षणाना सामुद्रिकोक्ताना निलयस्तच्छरीरस्य तन्निवासत्वात्। वैयाकरणत्वाच्च शब्द व्युत्पत्तिवैकल्यदोषरहितम्, अपशब्द चापभ्रष्ट तद्दोषसहित विचारयति सुविचक्षणाना तिलक। तथा शोभनाभिप्रायेण च्छन्द पद्यलक्षणशास्त्र यो व्याख्यानयति। सुयतीना सुमुनीना मतोऽभीष्ट। गुरु गुणाढ्य लघुमल्पगुण लब्ध्वा विज्ञाय पदे आचार्यादौ वैयावृत्यकरत्वे चास्थापयति नरहित समस्तमनुजजात्यनुकूल। विवादादौ परवादिनिराकरणेन विशिष्टो जय उत्साहविशेषस्त न्निर्वृत्त। अथवा च्छन्दस एव एतानि विशेषणानि। छन्दसि च विरतियतिरष्टौ च मकारादयो मात्रासमूहरूपा गणा भवन्ति।

"मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुश्च तथाऽऽदिलघुर्य।
जो गुरुमध्यगतो रलमध्य सोऽन्त्यगुरु कथितोऽन्त्यलघुस्त ॥"

ततश्च सुयतय शोभना विरामा गुरु-लघू एकमात्र-द्विमात्रको वर्णौ पद च स्थान गुरू आर्यायामर्धद्वयेऽपि पर्यन्तवर्तिनौ। द्वितीयार्धे तु षष्ठ स्थानमित्यादिकम्। नरौ नगण-रगणौ विशिष्टौ जगण-यगणौ तन्मिमतमित्यर्थ ॥ ३ ॥

१५ ग परवा॰। १६ स ग भर॰। १७ स ग ॰तिलआ। १८ ग च ॰मओ। १९ क विजयश्री। २० स ग ॰गम्य। २१ स ग ॰वैयकृप॰। २२ क मना॰। २३ स ग वा। २४ क ॰वृत्त। २५ स ग गात्य॰।

नत्वा जिनेश्वरस्य धर्मनाथस्य, त्रिभुवनस्वामिन पादकमल शशिनिर्मल शिव गतिगामिन । करोमि यथास्थिता सत्या गुणस्तुतिं श्रीजिनवल्लभस्य युगप्रवराग मसूरेर्गुणिगणदुर्लभस्य । इद चैकविंशतिमात्राकलित वास्तुभेदेषु द्वितीय कुन्दनामक छन्द इत्यर्थ ॥ १ ॥

अथ सर्वविद्याप्राधान्येन तर्कविद्यायास्तद्विपया तावद् विरोधालङ्कारेण स्तुतिमाह--

जो अपमाणु पमाणइ छद्दरिसण तणइ
जाणइ जिव नियनामु न तिण जिव कुवि घणइ ।
परपरिवाइगइंदवियारणपचमुहु
तसु गुणवन्नणु करण कु सक्कइ इक्कमुहु ? ॥ २ ॥

[ योऽप्रमाण प्रमाणानि पड्दर्शनाना
जानाति यथा निजनाम न तेन यथा कोऽपि घनानि ।
परपरिवादिगजेन्द्रविदारणपञ्चमुख
तस्य गुणवर्णनकरणे क शक्नोत्येकमुख ? ॥ २ ॥ ]

प्रमाण प्रत्यक्षादि, ततश्च योऽप्रमाणोऽपि सर्वथा प्रमाणरहितोऽपि। प्रमाणानि पड्दर्शनसत्कानि । पद् दर्शनानि चैवम्—

"बौद्ध नैयायिक साङ्ख्य जैन वैशेषिक तथा ।
जैमिनीय च नामानि दर्शनानाममून्यहो ! ॥
नैयायिकमतस्यान्ये भेद वैशेपिकै सह ।
न मन्यन्ते ततस्तेषा पञ्चैवास्तिकवादिन ॥
पड्दर्शनसङ्ख्या तु पूर्यते तन्मते किल ।
लोकायतमतक्षेपे कथ्यते तेन तन्मतम् ॥"

तेषा च प्रमाणान्येवम्—

"बौद्धोऽध्यक्षानुमाने वदति नयविदध्यक्ष-शाब्दानुमानौ-
पम्य मीमासकश्चानुमितिमुपमिताभाव शाब्द समक्षम् ।
अर्थापत्ति च चष्टे जिनयुगिति परोक्षापरोक्षे समक्ष
चार्वाकोऽध्यक्ष शाब्दानुमिति निगदत साङ्ख्य-वैशेषिकौ च ॥"

'वैशेषिका हि पूर्वे केचित् त्रीणि प्रमाणान्याहुराधुनिकाश्च द्वे एवेति जाना तीति विरोधस्तत्परिहारश्चैवम्-अपमाणोऽप्रगतगर्व, अथवाऽप्रमाणोऽपरिमाणोऽ

---

१ ग ग धाता । ७ च गा । ८ ख °रजुभ । १ क °गा । १० ग ग °न्दु । ११ क °वन्न । १२ ग ग °नदइ । १३ ग ग कसु । १४ ग ग °विरा ।

" कवय कालिदासाद्या कवयो वयमप्यमी ।
पर्वते परमाणौ च वस्तुत्वमुभयोरपि" ॥ "
तावद् यावज्जिनवल्लभो महाकविर्नाकर्ण्यते । तदुक्तम्—
" चित्र चित्र वितन्वन् नवरसरुचिर काव्यमन्यच्च भूय
सर्व निर्दोषमहो मुक्तमिव सगुणत्वेन पट्टांशुकश्रि ।
कान्तावत् कान्तवर्ण भरतनृपतिवच्चार्वलङ्कारसार
चक्रे माघादिसूक्तेष्वनभिमुखमहो ! मानस धीमता य ॥ "

अल्प चित्र चक्र–मुसलादिरूप ये परिजानन्ति, तदपि विशुद्ध यथावस्थित नैव। तेऽपि चित्रकविराजौ सर्वचित्रकविपूत्कृष्टा भण्यन्ते लोकैर्मुग्धजनता इत्यर्थ ॥५॥

सुकइविसेसियवयणु जु वप्पइराउकइ
सु वि जिणवल्लहपुरउ न पावइ [37]कित्ति कइ ।
अवरि अणेयविणेयहि सुकइ पससियहिं
तक्कवामयलुद्धिहिं निच्चु नमसियहिं ॥ ६ ॥

[ सुकविविशेषितवचनो यो वाक्पतिराजकवि
सोऽपि जिनवल्लभपुरतो न प्राप्नोति कांति काञ्चित् ।
अपरेऽनेकविनेयै सुकवय प्रशस्यन्ते
तत्काव्यामृतलुब्धैर्नित्य नमस्यन्ते ॥ ६ ॥ ]

सुकविभिर्विशेषितमतिशयपदवीं प्रापित सुकविभ्यो वा सस्कृतकाव्यकर्तृभ्यो विशेषित केवलप्राकृतप्रबन्धरूप वचन गोडवधादिप्रबन्धरूप यस्य स तथा । यो वाक्पतिराजकविर्यत्कीर्तिश्रुतिकुतूहलितदूरदेशान्तरायातेपु विद्वत्सु स्वरूपानुयोगे सति यन्नार्या तान् प्रति प्रत्युत्तरमेवमूचे—

" [(१)]होहिंति केवि जे ते न याणिमो जे गया नमो ताण ।
सपइ इह जे कइणो ते मह पइणो न सारिच्छा ॥ "

सोऽपि इह जिनवल्लभस्य पुरतो न पाण्डित्यकीर्ति काञ्चन प्राप्नोति । अपरेऽपि बाण–मयूरप्रभृतयोऽनके विनेयैस्तच्छिष्यैरेव सुकवय प्रशस्यन्ते । तत्काव्यामृतलुब्धैश्च नित्य नमस्यन्ते। इति तेऽपि तत्साम्य न प्राप्नुवन्तीति भावार्थ ॥६॥

(१) भविष्यन्ति केचिद् ये तान् न जानीमो ये गता नमस्तेभ्य ।
सम्प्रतीह ये कवयस्ते मम पत्युर्न सदृशा ॥

३३ख ग °रिति। ३४ ख °ता°। ३५ ख ग °गत । ३६ क °विमिश्र°। ३७ क कित्त। ३८क °विणेइहि । ३९ ग मुक्त। ४० ख ग °वचनरूप गोडवधादि। ४१ क °रातपु। ४२ ख ग केवि। ४३ ख ग ये। ४४ क पयणा। ४ क °पि जिन°। ४६ क °ष्यत त°। ४७ क °ति भाव इत्यर्थ ।

कव्वु अउव्वु जु विरयइ नवरसभरसहिउ
लद्धपसिद्धिहिँ सुकइहिँ सायरु जो महिउँ[26] ।
सुकइ माहु ति पससहिँ जे तसु सुहगुरुहु
साहु न मुणँहि[27] अयाणुय मइजियसुरगुरुहु ॥ ४ ॥

[ काव्यमपूर्वं यो विरचयति नवरसभरसहित
लब्धप्रसिद्धिभि सुकविभि सादर यो महित ।
सुकविं माघ ते प्रशसति ये तस्य शुभगुरो
साधु न जानतेऽज्ञा मतिजितसुरगुरो ॥ ४ ॥ ]

काव्यमपूर्वं रमणीयत्वादत्यद्भुत पूर्वकविभिरपि वा न कृतमिति महाप्रबन्धरूपप्रश्नोत्तरशतक-शृङ्गारशतक-प्रचुरप्रशस्तिप्रभृतिक यो विरचयति नवरसभरसहितम् । रसाश्च-" शृङ्गार-हास्य-करुणा-रौद्र-वीर-भयानका ।
बीभत्साद्भुत-शान्ताश्च नव नाट्ये रसा स्मृता ॥

लब्धप्रसिद्धिभिरत्यन्तप्रसिद्धै सुकविभिर्नरवर्ममहाराजसम्बन्धिभि सादर यो महित । सुकविं माघ ते प्रशसन्ति—

" माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे ।
स्मरन्ति भारवेरेव कवय कपयो यथा ॥"

इत्यादिना श्लाघन्ते, ये तस्य शुभगुरोर्मध्य यथावस्थित स्वरूप न जानते अज्ञप्राया मतिजितसुरगुरोरित्यर्थ ॥ ४ ॥

कालियासु कइ आसि जु [28]लोइहिँ वन्नियइ
ताव जाव जिणवल्लहु कइ नाअन्नियइ ।
अप्पु चित्तु परियाणँहि त पि विसुद्ध न य
ते वि चित्तकइराय भणिज्जँहि मुद्धनय ॥ ५ ॥

[ कालिदास कविरासाद् यो लोकैर्वर्ण्यते
तावद् यावज्जिनवल्लभ कविर्नाकर्ण्यते ।
अल्प चित्र परिजानन्ति तदपि विशुद्ध न च
तेऽपि चित्रकविराजा भण्यन्ते मुग्धनता ॥ ५ ॥ ]

कालिदास कविरासीत्, यो लोकैर्भारविमहाकविप्रभृतिभिरपि वर्ण्यते स्वकृतमहाकाव्यसदोषप्रस्तावे । तथा च तदुक्ति —

---

२६ क °आ । २७ ख ग °हिं । २८ ख ग °तक । २९ ग ग जानति । ३० ख माघि । ३१ ग ग लोर्यहिं । ३२ ग °वहि° ।

य सिद्धान्त विजानाति जिनवदनोद्भूतम्, अर्थतो वा जिनवचनोद्भूतं तस्य नामापि श्रुत्वाऽऽस्ता दर्शनादि, तुष्यति भवति य इह भव्य । गुरुपरतन्त्रै सर्व कृत्य क्रियते इति पारतन्त्र्य येन प्रकटितम् । सर्वत्रापि चैत्य-साध्वादौ शुद्ध-जिनाज्ञाप्रवृत्तिरूपो विधि । सम्यक्त्वादेर्मिथ्यात्वादिपरिहार इव देवपूजाऽऽदे सर्वथा आशातनादिपरिहारेण जिनप्रतिमादेश्चारित्रादेर्वाऽतीचारपरिहारेण साध्वा-दिर्विषय । ताभ्या कलित ज्ञानादित्रयवदेतत्त्रयस्यापि मोक्षाङ्गत्वात् । सखीति चर्च्चरीरूपत्वात् सम्बोधनम् । यस्य यश प्रसरत् न केनापि प्रतिस्खलितम्, तत उत्कृष्टस्यान्यस्याभावादित्यर्थ ॥ ८ ॥

जो किर सुत्तु वियाणइ कहइ जु कारवइ
करइ जिणेहिं जु भासिउ सिवपहु दक्खवइ ।
खवइ पावु पुव्वज्जिउ पर-अप्पह तणेउ
तासु अदसणि सगुणहिं ज्झूरिज्जइ घणउं ॥ ९ ॥

[ य किल सूत्र विजानाति कथयति य कारयति
करोति जिनैर्यद् भाषित शिवपथ दर्शयति ।
क्षपयति पाप पूर्वार्जित परात्मनो सम्बन्धि
तस्यादर्शनेन सगुणै खिद्यते प्रभूतम् ॥ ९ ॥ ]

य किल सूत्र विजानाति, कथयति भव्येभ्य । कारयति च तैरेव देशना-द्वारेण । करोति जिनैर्यद् भाषित मोक्षमार्ग दर्शयति । एवविधश्च सन् क्षपयति पाप पूर्वार्जित परात्मनो सम्बन्धि । तस्यादर्शनेन सगुणै खिद्यते प्रभूतमित्यर्थ ॥ ९ ॥

परिहरि लोयपवाहु पयट्टिउ विहिविसउ
पारतंति सहु जेण निहोडि कुमग्गसउ ।
दंसिउ जेण दुसंघ-सुसंघहं अंतरउ
वद्धमाणजिणतित्थह कियउ निरंतरउ ॥ १० ॥

[ परिहृत्य लोकप्रवाह प्रवर्तितो विधिविषय
पारतन्त्र्येण सह येन निराकृत्य कुमार्गशतम् ।
दर्शित येन दु सङ्घ-सुसङ्घयोरन्तर
वर्धमानजिनतीर्थस्य कृत निरन्तरम् ॥ १० ॥ ]

परिहृत्य लोकप्रवाहमविधिप्रवृत्तचैत्यसाधुभक्त्यादिक प्रवर्तितो विधिर्विषयश्च पारतन्त्र्येण सह । एतत्स्वरूप च पूर्वमेवोक्तम् । येन निराकृत्य कुमार्गशत दर्शित

५४ क °तो जिन° । ५५ क °त वा । ५६ क °त्पा । ५७ ख ग °मादि° । ५८ ख ग °परी° । ५९ क कलितना° । ६० क चचरी° । ६१ क पाव । ६२ क तणउ । ६३ क. सुरि° । ६४ क °सघहं ।

जिण कर्यं नाणा चित्तइ चित्तु हरति लहु
तसु दसणु विणु पुन्निहिं कउ लब्भइ दुलहु ।
सारइं बहु थुइ–थुत्तेइं चित्तइ जेण कँय
तसु पयकमलु जि पणमँहि ते जण कयसुकय ॥ ७ ॥

[ येन कृतानि नाना चित्राणि चित्त हरन्ति लघु
तस्य दर्शन विना पुण्यै कुतो लभ्यते दुर्लभम् ।
साराणि बहूनि स्तुति–स्तोत्राणि चित्राणि येन कृतानि
तस्य पदकमल ये प्रणमन्ति ते जना कृतसुकृता ॥ ७ ॥ ]

येन कृतान्यनेकानि चित्राणि नानारूपाणि चक्र–खड्गाद्याकारवर्णविन्यासरूपाणि पद्चक्रिका–सप्तचक्रिका–गजबन्धरूपाणि वा चित्त हरन्ति लघु । तस्य दर्शन विना पुण्यै कथ लभ्यते दुर्लभम् । तथा साराणि गम्भीरमहार्थानि बहूनि स्तुति–स्तोत्राणि चित्राणि गुप्तक्रिय–समसस्कृतार्धप्राकृतार्धसस्कृत–गोमूत्रिकाऽऽदिरूपाणि वा येन कृतानि । तस्य पदकमल ये प्रणमन्ति, ते जना कृतसुकृता । यद्यपि शेष कवयोऽपि चित्रकाव्यादिनिष्णातास्तथापि यादृश श्रीजिनवल्लभसूरेरुपलभ्यते, न तादृश प्रायोऽन्यस्य श्रूयते । तर्कादिविद्या इव ज्योतिर्गणितादिविद्या अपि सर्वा पद्मावतीमन्त्रविद्याप्रभृतयश्च तस्य सातिशया आसन्निति सर्वेभ्य उत्कर्ष । तथा चोक्तम्—

" योग्यस्थानानवाप्ते पृथुदवथुमिथोविप्रयोगाभितप्ते
शश्वद् विश्वभ्रमार्तेरपि च तनुतरामात्ममूर्ति दधत्य ।
सत्य यद्वक्त्रपङ्केरुहसदसि सहावासमासाद्य सद्यो
विद्या प्रीत्येव सर्वा युगपदुपचय लेभिरे भूरिकालान् ॥ " इत्यर्थ ॥ ७ ॥

एव तर्कादिविद्यानिधानत्वमभिधायाथ सिद्धान्तविपय तदाह—

जो सिद्धतु वियाणइ जिणवयणुब्भविउ
तसु नामु वि सुणि तूसइ होइ जु इहु भविउ ।
पारततु जिणि पयडिउ विहिविसइहिं कलिउ
सहि ! जसु जसु पसरतु न केणइ पडिखलिउ ॥ ८ ॥

[ य सिद्धान्त विजानाति जिनवद(च)नोद्भूत
तस्य नामापि श्रुत्वा तुष्यति भवति य इह भव्य ।
पारतन्त्र्य येन प्रकटित विधि–विषयाभ्यां कलित
सखे ! यस्य यश प्रसरत केनापि प्रतिस्खलितम् ॥ ८ ॥ ]

४८ ख ग. कइ । ४९ ख ग पुन्नई । ५० ख कय । ५१ क °कम्मनि° । ५२ क °धा त्रिन° । ५३ क नाम ।

य सिद्धान्त विजानाति जिनवदनोद्भूतम्, अर्थतो वा जिनवचनोद्भूत तस्य नामापि श्रुत्वाऽऽस्ता दर्शनादि, तुष्यति भवति य इह भव्य । गुरुपरतन्त्रै सर्व कृत्य क्रियते इति पारतन्त्र्य येन प्रकटितम् । सर्वत्रापि चैत्य-साध्वादौ शुद्ध-जिनाज्ञाप्रवृत्तिरूपो विधि । सम्यक्त्वादेर्मिथ्यात्वादिपरिहार इव देवपूजाऽऽदे सर्वथा आशातनादिपरिहारेण जिनप्रतिमादेश्चारित्रादेर्वाऽतीचारपरिहारेण साध्वादिर्विषय । ताभ्या कलित ज्ञानादित्रयवदेतत्त्रयस्यापि मोक्षाङ्गत्वात् । सखीति चर्च्चरीरूपत्वात् सम्बोधनम् । यस्य यश प्रसरत् न केनापि प्रतिस्खलितम्, तत उत्कृष्टस्यान्यस्याभावादित्यर्थ ॥ ८ ॥

जो किर सुत्तु वियाणइ कहइ जु कारवइ
करइ जिणेहिं जु भासिउ सिवपहु दक्खवइ ।
खवइ पावु पुव्वज्जिउ पर-अप्पह तणउ
तासु अदसणि सगुणहिं झूरिज्जइ घणउ ॥ ९ ॥

[ य किल सूत्र विजानाति कथयति य कारयति
करोति जिनैर्यद् भाषित शिवपथ दर्शयति ।
क्षपयति पाप पूर्वार्जित परात्मनो सम्बन्धि
तस्यादर्शनेन सगुणै खिद्यते प्रभूतम् ॥ ९ ॥ ]

य किल सूत्र विजानाति, कथयति भव्येभ्य । कारयति च तैरेव देशनाद्वारेण । करोति जिनैर्यद् भाषित मोक्षमार्ग दर्शयति । एवविधश्च सन् क्षपयति पाप पूर्वार्जित परात्मनो सम्बन्धि । तस्यादर्शनेन सगुणै खिद्यते प्रभूतमित्यर्थ ॥ ९ ॥

परिहरि लोयपवाहु पयट्टिउ विहिविसउ
पारतति सहु जेण निहोडि कुमग्गसउ ।
दसिउ जेण दुसघ-सुसघँह अतरउ
वद्धमाणजिणतित्थह कियउ निरतरउ ॥ १० ॥

[ परिहृत्य लोकप्रवाह प्रवर्तितो विधिविषय
पारतन्त्र्येण सह येन निराकृत्य कुमार्गशतम् ।
दर्शित येन दु सङ्घ-सुसङ्घयोरन्तर
वर्धमानजिनतीर्थस्य कृत निरन्तरम् ॥ १० ॥ ]

परिहृत्य लोकप्रवाहमविधिप्रवृत्तचैत्यसाधुभक्त्यादिक प्रवर्तितो विधिर्विषयश्च पारतन्त्र्येण सह । एतत्स्वरूप च पूर्वमेवोक्तम् । येन निराकृत्य कुमार्गशत दर्शित

५४ क °तो जिन° । ५५ क °त वा । ५६ क °ल्पा । ५७ ग ग °मादि° । ५८ ख ग °परी° । ५९ क कलितता° । ६० क चचरी° । ६१ क पाव । ६२ क तणउ । ६३ क सुरि° । ६४ क °सघहं ।

येन तु सङ्घ–सुसङ्घयोरन्तरम् । एवं च, कुर्वता वर्धमानजिनतीर्थस्य कृतं निरन्तरमविच्छेद इत्यर्थः ॥ १० ॥

जे उस्सुत्तुं पयपंहि दूरि ति परिहरइ
जो उ सुनाणं–सुदसण–किरिय वि आयरइ ।
गड्डरिगामपवाहपवित्ति वि संवरिय
जिण गीयत्थायरियँइ सव्वँइ संभरिय ॥ ११ ॥

[ ये उत्सूत्रं प्रजल्पन्ति दूरेण तान् परिहरति
यस्तु सुज्ञान–सुदर्शन–क्रिया अप्याचरति ।
गड्डरिकाप्रवाहगामिप्रवृत्तिं संवृत्य
येन गीतार्थाचार्याः सर्वेऽपि संस्मृताः ॥ ११ ॥ ]

ये उत्सूत्रं प्रजल्पन्ति, दूरेण तान् परिहरति । यश्च सुज्ञान–सद्दर्शनसाधुक्रियाश्चाचरति । गड्डरिकाप्रवाहगामिना प्रवृत्तिमपि संवृत्य । 'प्रवाहशब्दस्य पूर्वनिपातश्छन्दोवशात्' । येन गीतार्थाचार्याः सर्वेऽपि संस्मृतास्तदुक्तशुद्धमार्गप्रकाशनादित्यर्थः ॥ ११ ॥

चेईहरि अणुचियइ जि गीयइ वाइयँइ
तह पिच्छण–थुइ–थुत्तइ खिड्डइ कोउयँइ ।
विरहंकिण किर तित्थु ति सँव्वि निवारियँइ
तेहिं कइहिं आसायण तेण न कारियइ ॥ १२ ॥

[ चैत्यगृहेऽनुचितानि यानि गीतानि वादितानि
तथा प्रेक्षण–स्तुति–स्तोत्राणि क्रीडा कौतुकानि ।
विरहाङ्केन किल तत्र तानि सर्वाणि निवारितानि
तैः कृतैराशातनास्तेन न कार्यन्ते ॥ १२ ॥ ]

चैत्यगृहे यान्यनुचितानि गीत–वादित्राणि रसायनविवरणदर्शितानि । तथा प्रेक्षणक–स्तुति–स्तोत्राणि क्रीडा जलकेलिप्रभृतयः कौतुकानीन्द्रजालादीनि विरहाङ्केन श्रीहरिभद्रसूरिणा—

"(१)उचियमिह गीय–वाइयमुचियाण वयाइएहिं जं रम्मं ।
जिणगुणविसय सद्धम्मबुद्धिजणगं अणुवहासं ॥"

(१) उचितमिह गीत–वादित्रमुचितानां वयआदिभिर्यद् रम्यम् ।
जिनगुणविषयं सद्धर्मबुद्धिजनकमनुपहासम् ॥

६५ ख ग जिनवर्धमानानां । ६६ क उस्सुत्त । ६७ ग ग जा । ६८ ग ग "ण । ६९ क "ति स" । ७० ख ग "इ । ७१ ख.ग.छन्न" । ७२ ख ग प्रवाहेन । ७३ ख "हरिग ति" । ७४ क यति । ७५ ख "धुहि"

इति वदता किल तत्र चैत्ये तानि सर्वाणि निवारितानि । कुतो यतस्तै कृतैराशातना भगवदाज्ञोल्लङ्घनेनावज्ञा कृता भवति । तेन न कार्यन्त इत्यर्थ ॥१२॥

यद्येव विरहाङ्केन निषिद्धान्येतानि तर्हि किमर्थं क्रियन्त इत्यत आह—

लोयपवाहपयँट्टिहि कोऊहलपिँइँहि
कीरन्तइँ फुडदोसइँ संसयविरहियँहि ।
ताइ वि समँइनिसिद्धइ समइकयत्थियँहि
धम्मत्थीहि वि कीरहि बहुजणपत्थियँहि ॥ १३ ॥

[ लोकप्रवाहप्रवृत्तै कुतूहलप्रियै
क्रियमाणानि स्फुटदोषाणि सशयविरहित ।
तान्यपि समयनिषिद्धानि स्वमतिकदर्थितै
धर्मार्थिभिरपि क्रियन्ते बहुजनप्रार्थितै ॥ १३ ॥]

लोकप्रवाहप्रवृत्तै कुतूहलप्रियैश्च क्रियमाणानि स्फुटदोषाण्यपि सशयविरहितैस्तत्र करणेऽपि निश्चितदोषाभावै । तान्यपि जलक्रीडाऽऽदीनि सिद्धान्तनिषिद्धानि कुमार्गानुगामिस्वमतिकदर्थितै स्वबुद्धया धर्मार्थिभिरपि क्रियन्ते बहुजनप्रार्थितानि । कुतूहलप्रियत्वात् प्रायो जनानामित्यर्थ ॥ १३ ॥

जुगपवरागमु मनिउ सिरिहरिभद्दपहु
पडिहयकुमयसमूहु पयासियमुत्तिपहु ।
जुगपहाणसिद्धतिण सिरिजिणवल्लहिण
पयडिउ पयडपयाविण विहिपहु दुल्लहिण ॥ १४ ॥

[ युगप्रवरागमो मानित श्रीहरिभद्रप्रभु
प्रतिहतकुमतसमूह प्रकाशितमुक्तिपथ ।
युगप्रधानसिद्धान्तेन श्रीजिनवल्लभेन
प्रकटित प्रकटप्रतापेन विधिपथो दुर्लभेन ॥ १४ ॥]

युगप्रवरागमो मानित श्रीहरिभद्रप्रभुस्तद्वचनमननेन तन्मनननानुमानात् । प्रतिहतकुमतसमूहोऽनेकान्तजयपताकाऽऽदितर्कप्रणयनेन प्रकाशितमुक्तिमार्गश्चतुर्दशशतप्रकरणविधानेन । ततश्च युगप्रधानसिद्धान्तेन श्रीजिनवल्लभेन तदनुसारिणा प्रकटित प्रकटप्रतापेन भुवनविख्यातसत्त्वेन विधिमार्गो दुर्लभेन 'नि पुण्यानामिति गम्यते' इति शेष ॥ १४ ॥

७६ क तन का° । ७७ ख ग कियत । ७८ ख ग मनित । ७९ क दुर्लभो

विधिप्रकटनमेव प्रसङ्गत' प्राह—

**विहिचेईहरु कारिउ कहिउ तमाययणु**
**तमिह अणिस्साचेइउ कयनिव्वुइनयणु ।**
**विहि पुण तत्थ निवेइय सिवपावणपउण**
**ज निसुणेविणु रजिय जिणपवयणनिउण ॥ १५ ॥**

[ विधिचैत्यगृह कारित कथित तदायतन
तदिहानिश्राचैत्य कृतनिर्वृतिनयनम् ।
विधि पुनस्तत्र निवेदित शिवप्रापणप्रगुण
य निश्रुत्य रञ्जिता जिनप्रवचननिपुणा ॥ १५ ॥ ]

विधिप्रधान चैत्य तत् कारित देशनाद्वारेण श्राद्धै । कथित च तदायतनमिति । आय ज्ञानादिलाभ तनोतीति कृत्वा तदिहानिश्राचैत्यमपि न निश्रया साध्वाद्यायत्ततया वर्तते किन्त्वागमोक्तनीत्यैव वर्तते इति कृत्वा कृतनिर्वृतिनयनम् । एव विधिचैत्यस्यैतन्नामत्रय कथित भवति । विधिराज्ञा पुनस्तत्र निवेदित शिवप्रापण प्रवण । य विधिमाकर्ण्य रञ्जिता जिनप्रवचननिपुणा इत्यर्थ ॥ १५ ॥

विधिमेवाह—

**जहि उस्सुत्तुजणक्कमु कु वि किर लोयणिहि**
**कीरतउ नवि दीसइ सुविहिपलोयणिहि ।**
**निसि न ण्हाणु न पइट्ठ न साहुहि साहुणिहि**
**निसि जुवईहि न पवेसु न नट्टु विलासिणिहि[80] ॥ १६ ॥**

[ यत्रोत्सूत्रजनक्रम कोऽपि किल लोचने
क्रियमाणो नत्र दृश्यते सुविधिप्रलोकनै ( कै ) ।
निशि न स्नान न प्रतिष्ठा न साधूनां सा-वीना
निशि युवतीनां न प्रवेशो न नृत्य विलासिनीनाम् ॥ १६ ॥ ]

यत्रोत्सूत्रभाषकजनस्य क्रम आचारो नन्दिव्याख्यानादिक कोऽपि किल लोचनै क्रियमाणो नैव दृश्यते सुविधिप्रलोककै श्राद्धैरभि । निशि न स्नान न प्रतिष्ठा न साधूना साध्वीना च शेषयुवतीना च निशि न प्रवेश । 'वाक्यान्तरत्वान्निशीति न पौनरुक्त्यम्' नापि नृत्य विलासिनीनामित्यर्थ ॥ १६ ॥

८० ग ग रविदर । ८१ ख ग नमउनि । ८२ क मणया । ८३ क साहुह ।

जाइ नाइ न कयग्गहु मन्नइ जिणवयणु
कुणइ न निंदियकम्मु न पीडइ धम्मियर्यणु।
विहिजिणहरि अहिगारिउ सो किर सलहियइ
सुद्धउ धम्मु सुनिम्मलि जसु निवसइ हियइ ॥ १७॥

[ जाति-ज्ञातेर्न कदाग्रहो मन्यते जिनवचन
करोति न निन्दित कर्म न पीडयति धर्मिजनम्।
विधिजिनगृहेऽधिकारी स किल श्लाघ्यते
शुद्धो धर्म सुनिर्मले यस्य निवसति हृदये ॥ १७ ॥]

यत्र च जाति-ज्ञातिकदाग्रह स्नात्रादौ नास्ति । जातिर्धर्कटश्रीमालीयादि, ज्ञातिर्गोष्ठिकपुत्र-पौत्रादि । कदाग्रहो देवस्य दक्षिणादिदिशि अयमेव स्नान करोति, नान्य इत्यसदभिनिवेश । तथा विधिजिनगृहे अधिकारी समस्तकृत्यचिन्तक स एव श्लाघ्यते, यो मन्यते जिनवचनम्, करोति न निन्दित कर्म द्यूतादिव्यसन-पैशुन्य-जुगुप्सितव्यवहारादिकम्। न पीडयति धार्मिक जन देवद्रव्योद्ग्राहणिकादावपि। शुद्धो धर्मो देवद्रव्योपभोग-कटुविपाकाद्यनुचिन्तनरूप सुनिर्मले यस्य मनसि सदा निवसतीत्यर्थ ॥ १७ ॥

जित्थु ति-चउरसुसावयदिट्ठउ दव्ववउ
निसिहिं न नंदि करावि कुवि किर लेइ वउ।
वलि दिणयरि अँत्थमियइ जँहि न हु जिणपुरउ
दीसइ धरिउ न सुत्तइ जहि जणि तूररउ ॥ १८ ॥

[ यत्र त्रिचतुरसुश्रावकदृष्टो द्रव्यव्ययो
निशि न नन्दि कारयित्वा कोऽपि किल लाति व्रतम्।
वलिर्दिनकरेऽस्तमिते यत्र न खलु जिनपुरतो
दृश्यते धृतो न सुप्ते यत्र जने तूर्यरव ॥ १८ ॥]

यत्र च त्रि-चतुरसुश्रावकप्रतीतो द्रव्यव्यय कर्मकरादिविषय क्रियते। निशि नन्दि कारयित्वा कोऽपि किल व्रत न गृह्णाति। वलिरपि दिनकरेऽस्त गते यत्र नैव प्रतिमापुरतो दृश्यते धृत । तथा सुप्ते जने प्रहरमात्रातिक्रमे वादित्रशब्दो न भवत्यसयतजनजागरणभयादित्यर्थ ॥ १८ ॥

जहिँ रयणिहि रहभमणु कयाइ न कारियइ
लउडारसु जहिँ पुरिसु वि दिंतउ वारियइ।

८४ ख ग धम्मियजणु। ८५ क °यादिता°। ८६ क करावित्रि। ८७ ख ग अरिथ°।

विधिप्रकटनमेव प्रसङ्गत प्राह—

विहिचेईहरु कारिउ कहिउ तमाययणु
तमिह अणिस्साचेइउ कयनिव्वुइनयणु ।
विहि पुण तत्थ निवेइय सिवपावणपउण
ज निसुणेविणु रंजिय जिणपवयणनिउण ॥ १५ ॥

[ विधिचैत्यगृह कारित कथित तदायतन
तदिहानिश्राचैत्य कृतनिर्वृतिनयनम् ।
विधि पुनस्तत्र निवेदित शिवप्रापणप्रगुण
य निश्रुत्य रञ्जिता जिनप्रवचननिपुणा ॥ १५ ॥ ]

विधिप्रधान चैत्य तत् कारित देशनाद्वारेण श्राद्धै । कथित च तदायतनमिति । आय ज्ञानादिलाभ तनोतीति कृत्वा तदिहानिश्राचैत्यमपि न निश्रया साध्वाद्यायत्ततया वर्तते किन्त्वागमोक्तनीत्यैव वर्तते इति कृत्वा कृतनिर्वृतिनयनम् । एव विधिचैत्यस्यैतन्नामत्रय कथित भवति । विधिराज्ञा पुनस्तत्र निवेदित शिवप्रापण प्रवण । य विधिमाकर्ण्य रञ्जिता जिनप्रवचननिपुणा इत्यर्थ ॥ १५ ॥

विधिमेवाह—

जहि उस्सुत्तजणक्कमु कु वि किर लोयँणिहि
कीरतउ नवि दीसइ सुविहिपलोयणिहिं ।
निसि न ण्हाणु न पइट्ठ न साहुँहि साहुणिहि
निसि जुवइहिं न पवेसु न नट्टु विलासिणिहि[८०] ॥ १६ ॥

[ यत्रोत्सूत्रजनक्रम कोऽपि किल लोचनै
क्रियमाणो नैव दृश्यते सुविधिप्रलोकनै ( के ) ।
निशि न स्नान न प्रतिष्ठा न साधूनां साध्वीना
निशि युवतीनां न प्रवेशो न नृत्य विलासिनीनाम् ॥ १६ ॥ ]

यत्रोत्सूत्रभाषकजनस्य क्रम आचारो नन्दिव्याख्यानादिक कोऽपि किल लोचनै क्रियमाणो नैव दृश्यते सुविधिप्रलोकनै फलैभि । निशि न स्नान न प्रतिष्ठा न साधूना साध्वीना च शेषयुवतीना च निशि न प्रवेश । 'वाक्यान्तरत्वान्निशीति न पौनरुक्त्यम्' नापि नृत्य विलासिनीनामित्यर्थ ॥ १६ ॥

८० ग म रंजियउ । ८१ ग म °निसुणवि । ८२ क °यतपा । ८३ क साहुण ।

जँहि भोयणु न य सयणु न अणुचिउ वइसणँउ
सह पहॅरणि न पवेसु न दुट्ठउ बुल्लणउँ ॥ २१ ॥

[ यत्र श्रावकास्ताम्बूलं न भक्षयन्ति लान्ति न च
यत्रोपानहो धारयन्ति न श्रावका शुद्धनया ।
यत्र भोजनं न च शयनं नानुचितमुपवेशनं
सह प्रहरणैर्न प्रवेशो न दुष्टं जल्पनम् ॥ २१ ॥ ]

यत्र श्रावकास्ताम्बूलं न भक्षयन्ति, गृह्णन्ति च नैव । यत्रोपानहोऽपि न धारयन्ति मध्ये विशुद्धाचारा । यत्र न भोजनं शयनं वा नाप्यनुचितं गब्दिकाद्यासनं परिभुज्यते । सह प्रहरणेन क्षुरिकादिना न प्रवेशस्तन्मध्ये । नापि दुष्टं गालीप्रदानादिकं भाषणमित्यर्थः ॥ २१ ॥

जहिं न हासु न वि हुड्ड न खिड्ड न रूसणँउ
कित्तिनिमित्तु न दिज्जइँ जहिं धणु अप्पणउँ ।
करॅहि जि बहु आसायण जहिं ति न मेलियँहि
मिलिय ति केलि करंति समाणु महेलियहिं ॥ २२ ॥

[ यत्र न हासो नापि होडा न क्रीडा न रोषणं
कीर्तिनिमित्तं न दीयते यत्र धनमात्मीयम् ।
कुर्वन्ति ये बह्वाशातना यत्र ते न मेल्यन्ते
मिलितास्ते केलीं कुर्वन्ति समं महेलाभिः ॥ २२ ॥ ]

यत्र न हासो नापि हुड्डा प्रसिद्धा नापि क्रीडा द्यूतादिरूपा नापि रोषकरणम् । यत्र गायक-वैणविकादीनां कलया तुष्टैः श्रावकैर्जिनादिगुणरञ्जितैरेव धनं दीयते, न तु कीर्तिनिमित्तमात्मीयम् । कुर्वन्ति ये नट-विटादयः प्रभूतामाशातनां यत्र ते न संसर्गमानीयन्ते । किमित्यत आह-मिलिता हि सन्तस्ते दुराचारा केलीं कुर्वन्ति समं महेलाभिरित्यर्थः ॥ २२ ॥

जहिं संकंति न गहणु न माहि न मंडलउ
जहिं सावयसिरि दीसइ कियउ न विंटलउँ ।
ण्हवणयार जण मिलिवि जँहि न विभूसणउ
सावयजणिहि न कीरइ जँहि गिहचिन्तणउ ॥ २३ ॥

[ यत्र सङ्क्रान्तिर्न ग्रहणं न मावे न मण्डलकं
यत्र श्रावकशिरसि दृश्यते कृतो न वेष्टनकः ।

९७ ख ग °उ । ९८ ख ग पहिरणि । ९९ ख ग करंति । १०० क °सिधि । १०१ क विन्लउ । १०२ ख मेल्हवि । १०३ ग ग °जणहिं ।

जहि जलकीडदोलण हुति न देवयह
माहमाल न निसिद्धी कयअट्ठाहियईं ॥ १९ ॥

[ यत्र रजन्या रथभ्रमण कदाचिन्न कार्यते
लगुडरास यत्र पुरुषोऽपि ददद् वार्यते ।
यत्र जलक्रीडाऽऽदोलन भवति न देवताना
माघे माला न निषिद्धा कृताष्टाह्निकानाम् ॥ १९ ॥ ]

यत्र रजन्या रथभ्रमण कदाचिन्न कार्यते । लगुडरास यत्र पुरुषोऽप्यास्ता योषिद् ददद् वार्यते । यत्र जलक्रीडास्तथा देवतानामम्बिकाऽऽदीना चान्दोलन न भवति । एतद्दोषाश्च रसायनविवरणे किञ्चिदुक्ता । माघे मासि विशेषेण स्नानादिपूर्वक प्रतिमाया मालारोपण तदपि न निषिद्ध कृताष्टाह्निकाना श्रावकाणामष्टाह्निको हि शाश्वतपूजास्ता अवश्य कार्यास्ताश्च कुर्वद्भियंषाऽपि क्रियते तदा क्रियताम् । एतच्च दिगम्बरभक्ताभिनवप्रबुद्धपल्लकश्रावकोपरोधेन प्रभूततरदूषणाभावेन चोक्तम् । तेन 'माहमालजलकीलदोलण' इत्यादिकवास्तवसावेदिकमाघमालानिषेधेन रसायनोक्तेन न विरोध इत्यर्थ ॥ १९ ॥

जँहि सावय जिणपडिमह कँरिहि पइट्ठ न य
इच्छाच्छंद न दीसहि जँहि मुँद्धगिनय ।
जँहि उस्सुत्तपयट्टह वयणु न निसुणियइ
जहि अजुँत्तु जिण-गुरुहु वि गेउ न गाइयइ ॥ २० ॥

[ यत्र श्रावका जिनप्रतिमाना कुर्वन्ति प्रतिष्ठा न च
यथाच्छन्दा न दृश्यन्ते यत्र मुग्धाङ्गिनता ।
यत्रोत्सूत्रप्रवृत्ताना वचन न निश्रूयते
यत्रायुक्त जिन–गुर्वोरपि गेय न गायते ॥ २० ॥ ]

यत्र श्रावका जिनप्रतिमाना प्रतिष्ठा न कुर्वन्ति । उमास्वातिवाचकादिविरचितप्रतिष्ठाकल्पादिष्वप्रतिपादितत्वात् । यथाच्छन्दा उत्सूत्रभाषका मुग्धप्राणिप्रणता यत्र व्याख्यानादिप्रवृत्ता न दृश्यन्ते । यत्रोत्सूत्रप्रवृत्ताना वचन न श्रूयते । यत्रायुक्त विरोध-शृङ्गारातिशयाविर्भावक जिनाचार्ययोरपि गेय न गीयत इत्यर्थ ॥ २० ॥

जँहि सावय तंबोलु न भक्खंहि लिंति न य
जँहि पाणहि य धरंति न सावय सुद्धनय ।

८८ स ग °दिय । ८९ स ग °ह्निकादिना° । ९० स ग °प्रन्दर° । ९१ स ग हुति । ९२ स ग करइ । ९३ क. मुद्धगि । ९४ स ग अजुत्त । ९५ क °प्रवृत्ता । ९६ स ग भक्खहिं ।

जैंहि फुल्लइ निम्मल्लु न अक्खय-वर्णहँ[108]लइ
मणिमडणभूसणइ न चेलइँ निम्मलइँ ।
जित्थु न जइँहि ममत्तु 'न'[109] जित्थु वि तव्वसणु
जहि न अत्थि गुरुदसियँ[110]नीइहि पम्हसणु ॥ २५ ॥

[ यत्र पुष्पाणि निर्माल्य नाक्षत-वनफलानि
मणिमण्डितभूपणानि न चेलानि निर्मलानि ।
यत्र न यतीना ममत्व न यत्रापि तद्वसन
यत्र नास्ति गुरुदर्शितनीते प्रस्मरणम् ॥ २५ ॥ ]

यत्र पुष्पाणि निर्माल्य भवन्ति, नाक्षतां[111]क्वथितवनफलानि, मणिमण्डितानि भूषणानि, वस्त्राण्यपि निर्मलान्यनुपहतानि नैव । यत्र यतीना मदीयमेतद् देवगृहमिति न ममत्वम् । नापि यत्र चैत्यगृह एव तेषा वास । यत्र नास्ति गुरुदर्शितस्याचारस्य दशविधाशातनापरिहाररूपस्य प्रस्मरणं[112]मुत्फसन लोप इत्यर्थं ॥ २५ ॥

जहिं पुच्छिय सुसावय सुहगुरुलक्खणइ
[113]भँणिहि गुणन्नुय सच्चयँ पच्चक्खह तणइँ ।
जहिं इक्कुत्तु वि कीरइ निच्छँइ सगुणउ
समयजुत्ति विहडतु न बहुलोयँहँ[114] [त]णउ ॥ २६ ॥

[ यत्र पृष्टा सुश्रावका शुभगुरुलक्षणानि
भणन्ति गुणज्ञा सत्यानि प्रत्यक्षसत्कानि ।
यत्रैकोक्तमपि क्रियते निश्चयेन सद्गुण
समययुक्त्या विघटमान न बहुलोकस्य ॥ २६ ॥ ]

यत्र च केनापि पृष्टा सुश्रावका शुभगुरुलक्षणानि विशिष्टगीतार्थत्वातिशयविशेषकत्वादीनि भणन्ति गुणज्ञा सत्यानि प्रत्यक्षसत्कानि साक्षात् प्रतीयमानानि। यत्रैकसुश्रावकोक्तमपि क्रियते निश्चयेन सद्गुण कार्य देवगृहकर्मान्तरादिकम् । समययुक्त्या विघटमान बहुलोकोक्तमपि जलक्रीडादिक '[115]नैवेत्यर्थ ॥ २६ ॥

जहिं न अप्पु वन्निज्जइ परु वि न दूसियइ
जैंहि सग्गुणु वन्निज्जइ विगुणु उवेहियइ ।
जैंहि फिर वत्थु-वियारणि कसु वि न वीहियइ
जहि जिणवयणुत्तिन्नु न कँहँ[116] वि पयपियइ ॥ २७ ॥

---

१०८ ख ग °फ्लह। १०९ क म । ११० ख ग °दसिउ°। १११ ख ग नाक्षतवन°। ११२ ग ग °मुत्फुसनं। ११३ ख ग भणहिं। ११४ ख ग °छोयस्सह तणउ। ११५ क.ना चे°। ११६ क कह प°

स्नपनकार जन मुक्त्वा यत्र न विभूषण
श्रावकजनैर्न क्रियते यत्र गृहचिन्तनम् ॥ २३ ॥]

यत्र सूर्यादे सक्रान्तिर्ग्रहण वा न स्नान–दान–पूजाविधानादिना आराध्यते, मिथ्यारूपत्वात् तस्य । माघे मासि हरि–हर–सूर्यादीनामिव जिनस्याप्यग्रे गैरेयक मण्डलैक रक्तवर्णपुष्प–चन्दनाद्यभ्यर्चित न क्रियते । यत्र श्रावकाणा शिरसि दृश्यते कृतो न वस्त्रवेष्टनक । उपलक्षण चैप शेषस्याप्येकसाटिकोत्तरीयातिरिक्तस्य वस्त्रान्तरपरिहारस्य । स्नपनकारान् जनान् मुक्त्वा यत्र न विशेषविभूषाकरण शृङ्गारादि वृद्धिहेतु श्रावकजनैर्न क्रियते । यत्र गृहचिन्तन गृहसम्बन्धिवाणिज्यादिकार्यानु ध्यानमित्यर्थ ॥ २३ ॥

जहिं न मलिणचेलगिहि[१०७] जिणवरु पूइयइ
मूलपडिम सुइभूइ वि छिवइ न सावियइ ।
आरत्तिउ उँत्तारिउ ज ' किर जिणवरह
तं पि न उत्तारिज्जइ बीयजिणेसरह ॥ २४ ॥

[ यत्र न मलिनचेलाङ्गैर्जिनवर पूज्यते
मूलप्रातिमा शुचिभूताऽपि स्पृशाति न श्राविका ।
आरात्रिकमुत्तार्यते यत् किल जिनवरस्य
तदपि नोत्तार्यते द्वितीयजिनेश्वरस्य ॥ २४ ॥ ]

यत्र न मलिनवस्त्र–शरीरैर्जिनवर पूज्यते । मूलप्रतिमा च शुचिभूताऽपि कृतस्नानाद्युपचाराऽपि योपिन्न स्पृशति । आकस्मिकस्य स्त्रीशरीरधर्मस्य कथञ्चित् तदाऽपि सम्भवात् । तस्य च महारक्तरूपत्वेनात्याशातनाहेतुत्वात् । अत्याशातनायाश्च सप्रातिहार्यप्रतिमया सामान्यरूपयाऽपि "(१)आउट्टियावराह सन्निहिया न खमए जहा पडिमा' इति वचनात् असहनात्, तथा च कथञ्चिदनर्थस्यापि भावात् । मूलप्रतिमायाश्च–"(२)जमहिगयबिंबसामी सव्वेसिं चेव अब्भुदयहेऊ' इति वचनात् । समस्तसघाभ्युदयहेतुत्वेन स्थापितत्वात् । आशातनायाश्च सामान्यरूपाया अपि तत्र रक्षणात्, किं पुनरेवंविधमहाशातनाया ? तस्मात् सुदृष्ट शुचिभूताऽपि न स्पृशतीति । आरात्रिक यत् किलोत्तारितमेकस्य जिनवरस्य तदेव नोत्तार्यते द्विती यादेर्जिनेश्वरस्य निर्माल्यरूपत्वापत्तेस्तस्येत्यर्थ ॥ २४ ॥

(१) कृतापराध समिहिता न क्षमते यथा प्रतिमा ।
(२) यदधिकृतबिम्बस्वामी सर्वेषां चैवाभ्युदयहेतु ।

१०४ क. यदि । १०५ ख ग °मइउ । १०६ ख ग °नादि भम्य° । १०७ ख ग गिं ।

